श्री काशी संस्कृत ग्रन्थमाला ७३

# काकचण्डीश्वरकल्पतन्त्रम्

## 'विद्योतिनी'-हिन्दीव्याख्योपेतम्

व्याख्याकार

**श्री कैलाशपति पाण्डेय**

ए. एम. एस., बी. ए., साहित्याचार्य, काव्यतीर्थ,
चिकित्सक-जिलापरिषद्, वाराणसी



**चौखम्भा संस्कृत संस्थान**

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
७३

# काकचण्डीश्वरकल्पतन्त्रम्

'विद्योतिनी'-हिन्दीव्याख्योपेतम्

व्याख्याकार
श्री कैलाशपति पाण्डेय
ए. एम. एस., बी. ए., साहित्याचार्य, काव्यतीर्थ,
चिकित्सक-जिलापरिषद्, वाराणसी





चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
( पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : तृतीय, वि० संवत् २०३९





अन्य प्राप्तिस्थान
चौखम्भा विश्वभारती
पोस्ट बाक्स नं० ८४
चौक, ( चित्रा सिनेमा के सामने )
वाराणसी–२२१००१ ( भारत )
फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
73

# KĀKACAṆḌĪŚWARA KALPATANTRAM

*Edited with 'Vidyotini' Hindi Commentary*

By
SRĪ KAILĀŚPATI PĀṆḌEYA
*A. M. S., B. A.*

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publishers and Distributors of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI ( INDIA )

**Phone : 65889**

**Edition Third : 1983**

*Also can be had of*

**CHAUKHAMBHA VISVABHARATI**

Post Box No. 84

Chowk ( Opposite Chitra Cinema )

VARANASI-221001

Phone : 65444

# दो शब्द

काकचण्डीश्वर कल्प-तंत्र सिद्धिकाल (ईसा के कुछ पूर्व से, १००० बर्ष बाद तक) का ग्रन्थ है। उस काल में देवताओं की उपासना के विभिन्न प्रकार प्रचलित थे, जिनमें कुछ आज भी साधकों की गुप्तसाधना के रहस्य बने हुए हैं। उसकी गोपनीयता ही इसके प्रचार में बाधक हुई, जिससे आज इसे अन्ध-विश्वास या जादू कहकर टाल दिया जाता है। किन्तु मन के निग्रह से शक्ति-विशेष का अभ्युदय आज के मनोवैज्ञानिक भी मानते हैं। उस काल में हमारा चिकित्सा-जगत् भी तांत्रिक क्रियाओं का आश्रय बना तथा आज भी इन औषधों के सिद्धि-विशेष के आधार पर फल विशेष शतशोनुभूत और प्रत्यक्षदृष्ट हैं। उदाहरण के लिए तिजारी और चौथिया ज्वर कतिपय ओषधि के सिद्धि-विशेष के आधार पर विशिष्ट काल में धारण या सेवन से छूट जाता है। सिद्ध सहदेवी के शिर पर धारण करने मात्र से ज्वर से मुक्ति मिलती है। विशेष क्या कसौंजी के दिखाने मात्र से भयंकर विषैले साँप भी शिथिल हो जाते हैं। कुछ औषधों के दर्शन-स्पर्शन या सेवन मात्र से सर्प, विच्छू आदि का भयंकर विष-प्रभाव नष्ट हो जाता है। इसी तरह के प्रयोगों से अर्श, श्वास, भ्रम, मूर्च्छा, अपस्मार, बन्ध्यत्व और कुष्ठ आदि कष्टसाध्य व्याधियों में भी आश्चर्यजनक लाभ होते देखा और सुना जाता है।

उपर्युक्त उद्धरण से स्पष्ट है कि मन के निग्रह तथा मंत्र-शक्ति का अवश्यमेव ओषधि पर प्रभाव होता है। इसी तरह का विश्लेषण तथा मार्गदर्शन प्रस्तुत ग्रंथ में उपलब्ध है। वैसे तो काकचण्डीश्वर नाम से प्रारम्भ होने वाले दो-तीन अन्य ग्रंथ भी हस्तलिखित रूप में वाराणसेय संस्कृत विश्वविद्यालय के सरस्वती भवन पुस्तकालय में देखने को मिले, तथा कुछ आगम के आकर ग्रंथों में काकचण्डीश्वर संवाद रूप में भी यत्र-तत्र बिखरा साहित्य उपलब्ध होता है। परन्तु वह सब केवल तंत्र का विषय है।

यह पहले स्पष्ट किया जा चुका है कि उस काल में इस तरह की सिद्धि या मंत्र-शक्ति से साधकों ने बड़ी-बड़ी सिद्धियाँ प्राप्त की थीं और अद्‌भुत चमत्कार दिखाये थे, परन्तु इसकी गोपनीयता इसे लुप्त कर के छोड़ी। संभव है इसका शिकार हमारा प्रस्तुत ग्रंथ भी हो जिससे इसकी क्रियाओं का सामंजस्य किसी अन्य ग्रंथ से बैठता हो, कुछ इसकी क्रियायें लुप्त छोड़ दी गई हों, अथवा प्रकरणान्तर से पुष्टि भी हुई रही हो—तो वह भाग हमारे अन्य प्रचुर साहित्य की भाँति वर्वरता का शिकार हो गया हो। अस्तु, प्रस्तुत विषय केवल अन्वेषण का विषय है, जिसके लिए ग्रंथ का उद्धार आवश्यक था। इस अभाव को काशी के सुप्रसिद्ध प्रकाशक श्रीमान् बाबू श्री जय कृष्णदास जी गुप्त महोदय ने पूर्ण कर आयुर्वेद जगत् का महान् उपकार किया है। तदर्थ वे धन्यवाद के पात्र हैं।

कैलाशपति पाण्डेय

कालभैरवाष्टमी<br>काशी, २०१९ वि०

# प्रस्तावना

नैवेदं परोक्षं प्रेक्षावतां प्रत्नतत्त्वप्रविविक्षूणां सुधियां यदस्माकं भागधेयानामाकस्मिकविवर्तनदारुणा दैवदुर्विलसितेन कामपि कृपणां करुणैकशरणां दशामापन्नतया केषांचिदसमीक्ष्यकारिणां विद्यावैरिणां क्षिप्रकारितादत्तहस्तेन द्वेषेण मोहेन वा क्षयं प्रापितान्यनेकानि भारतभारतीभूषाभूतानि ग्रन्थरत्नानि। कैश्चित् प्रत्यक्षमेवाशुशुक्षणिभक्ष्यतां प्रापितानि तानि। तदपरैस्तु समुपेक्षणमेव क्ष्वेडमिव तेषां तिरस्कारसहकारेण परिकल्पितः परमोपायोऽपायसम्पादनार्थम्। विनाशनकलापीयं नीरन्ध्रनीरदघनघटेव तथा भारतभूनभोभागं मेदुरितवती यथा चिररात्रायाचलचिरप्रभाभासुरोऽपि ज्ञानभास्वान् लोचनागोचरतामेव समुपाजगाम। अहो घोरं तदन्धतमसं यदन्तःप्रविष्टानि ग्रन्थरत्नान्यधिकृत्य वयमधुना नोत्प्रेक्षितुमपि पारयामः कानि कानि कियन्ति कीदृशानि वा तत्कर्तॄणां यशसा समं परलोकमिवालोकाभावं तानि गतानीति। किन्तु किमत्र विचित्रं चित्रं यदि गैर्वाणी वाणी दुर्णयैरविनयैर्वैधेयैर्विधिवशात् तथा विरहितभूषा विनिर्वर्तिता? केष्टापि नानिष्टां कष्टां दशां सम्पद्यते जननी यदा तदीयास्तनया वयमिव परतन्त्रतया निगडिता इव चिरं विपद्यन्ते? इदमेव परमाकूतकरमस्माकं संप्रति प्रतिभाति यत् प्रवर्तितेऽपि चिरं ज्ञानचयचूर्णीकरणचणे वक्रे कालचक्रे कथमित्र न विनष्टानि तान्यपि यानि सांप्रतं समुपलभ्यन्ते।

समुपलब्धेषु ग्रन्थेषु मुद्रितानां संख्या कीदृशीति विदितचरमेव संस्कृतविद्याजुषां विदुषाम्। अनेकमानवीयजीवनव्ययेनाऽपि न पारयति कोऽपि साधारणधिषणासंपन्नः साकल्येन सकलसंस्कृतपुस्तकपारापारं समुत्तरीतुम्। अमुद्रितानामपि ग्रन्थानां संख्या नाल्पीयसी। कियन्तो विपुलसंख्याकाः सन्तो ग्रन्थाः सन्ति सांप्रतं यूरोपीयपुस्तकालयेषु संस्थापिता येषां दर्शनमपि नो दुष्करमेव भारतस्थानाम्।

भारतेऽपि समुपलब्धानाममुद्रितानां संख्या भूयस्येव । काशी-मद्रासप्रभृति-
नगरस्थितेषु राजकीयहस्तलिखितपुस्तकसङ्ग्रहालयेषु प्रभूतानां हिन्दुभूपतीनां
च पुस्तकालयेषु सन्त्यनेके सद्ग्रन्था ये नाद्याऽपि क्वापि केनापि प्रकाशिताः ।
समस्तभारतभूभागमलङ्कुर्वतां पण्डितानां पण्डितानां कुले चोत्पन्नानां
भवनेष्वपि सन्ति निलीनानि करालकलिकालभीतानीव कानिचन सद्रत्नसमा-
नानि ग्रन्थप्रधानानि ।

गतेषु कतिपयवर्षेषु प्राकाश्यं प्रापितान्यनेकानि ग्रन्थरत्नानि । मोहमय्यां
निर्णयसागरयन्त्रालयः काश्यां विद्याविलासयन्त्रालयश्च विशेषतोऽत्र समुल्लेख-
मर्हतः । कश्मीराधिपतिरनन्तशयनाधिनाथो वटोदरराजश्च प्रकाश्यं प्रापणेन
दुर्लभानां संस्कृतग्रन्थानां केषां विदुषां न सन्ति धन्यवादसहस्राहीः । यूरोपी-
यानां विशेषतो शर्मण्यदेशीयानां विदुषां प्राचीनार्यसंस्कृतिसमाकृष्टमानसानां
विलक्षणजिज्ञासा समुद्बोधितज्ञानपिपासानां समुत्साहाध्यवसायाभ्यां प्रवर्तिता
च विपुलविषयपरामर्शविचक्षणा सकलभूतलसञ्चरणेव सर्वतोगामिनी काऽपि
गवेषणासरणिः । यूरोपीयविदुषामुदाहरणजागरितान्तःकरणानामेतद्देशीयानां
नवीनविद्यानुशीलनप्रवीणानां विदुषां चोत्साहस्तान् तस्यामेव पद्धत्यामस्खलित-
संचारं चारु चिरमचालयत् चालयति च । बहुकल्पनाविकल्पकलाभिरालोड्यतैव
तैर्वैदिकविद्यापारावारः । बौद्धदर्शनेष्वपि तैः साधु न्यमज्ज्यत । शिलालेखादि-
गहनकाननमपि तैर्भृशमभुज्यत । साहित्योद्यानमपि तैश्चिरमालोक्यत । किन्तु
नाद्यापि तैः प्रतिहारभूमिरपि चक्षुःसाक्षितामानीता नव्यपाण्डित्यमण्डितैः
पण्डितप्रकाण्डैर्बहूपकारकरणक्षमासामायुर्वेदादिशास्त्राणाम् । तेषामध्यवसायं
समुत्साहं च वयं हृदयेनाभिनन्दामः । किन्तु तदीयालोचनाञ्चितलोचनैरपि
जनैर्नाद्यापि हृद्या सिद्धिः काप्यधिगता यथा वास्तविकं किमपि फलं समुत्पादितं
भवेत् । तदनुकरणशरणानामपि फलं प्रत्यवधानं ददतामस्माकं नोत्सहते वाणी
तांस्तथा संवर्द्धयितुं यथा ते लब्धपरमार्था इव कृतकृत्या आत्मानमाकलयेयुः ।
संप्रति सांप्रतमिदमेव नः प्रतिभाति यद् या काऽपि गवेषणा प्रवर्तिता भवेत् तत्र
तद्भक्तैरिदं द्वयं साध्ववधेयम् । प्रथमं तावत् तैर्वृथावैदुष्याटोपं विपुलाडम्बर-
मण्डितं परिखण्ड्य तद्विषयकं वास्तविकं गाम्भीर्यं सहोदरं पाण्डित्यं प्रतिपत्तुं
प्रयतितव्यम् । सत्यापलापं हृदयतो विलोप्य साधु विशोध्य च स्वानुमताग्रह-
ग्रहिलत्वं चित्तस्य िनष्कपटैः सत्यप्रियैश्च तैः सर्वदा भवितव्यम् ।



अपरं च । एतादृशो विषयस्तैर्गवेषणीयत्वेन ग्रहीतव्यो यस्योहापोहेन
जगत्या दुर्गतिदूरीकरणकुशलः कोऽप्यपूर्वोपायो लक्षितो भवेत् । यदि कल्पनयैव
प्रवृत्य वितथमेव किमपि प्रथितं भवेत् तर्हि कोऽर्थो गवेषणायासेन ? क्वापि
सुखमासीनैः कल्पितवस्तुका कथैव कस्मान्न काऽपि लेखनीया ? इदमेवेदानीं
परमप्रयोजनीयं गवेषणा ध्वरबद्धपरिकराणां यत्तैः सद्विषये परिपूर्णं पाण्डित्य-
मधिगन्तव्यम् ।

प्रकृतविषयमायुर्वेदशास्त्रमेव परिगृह्य पूर्वोक्तकथनं विशेषतोऽवबोधाय समु-
दाहरामः । जाल्ली ( Jolly ) महाशयेन लिखितमासीदेकं पुस्तकं यस्मिन्नस्ति
समूल्लेखो मुख्यतमानां ग्रन्थरत्नानाम् । किन्तु न स्पृशत्यपि तत् तच्छास्त्रगतान्
सर्वान् विषयान् । यदि कोऽपि तदनुशीलनादायुर्वेदतत्त्वं विज्ञातुमीशेत तर्हि स
घटस्थेन सामुद्रेण जलेन जलधिगतानि सर्वाण्येव वस्तून्याकलयितुं प्रभवेत् ।
शर्मण्यभाषानिबद्धत्वात् तदनभिज्ञानां विशेषत इदं सुदुर्गमम् । होर्नली
( Hoernle ) महाशयेन वैद्यकशास्त्रे काऽपि गवेषणा प्रारभ्यत तदेकांशः
प्रकाश्यत च, किन्तु तदीयास्तत्र प्रयत्ना अकाण्डच्छेदमेवोपगताः । श्रीमता
गोण्डलसामन्तेन लिखितमासीदेकं पुस्तकं परिचयमायुर्वेदस्य वितरीतुं, किन्तु
तन्नास्माभिरद्यावधि प्रत्यक्षीकृतम् । आचार्यैः प्रफुल्लचन्द्ररायैर्या सेवा रसायन-
शास्त्रेतिहासं ( History of Hiddu Chemistry ) लिखित्वा भारतभा-
रत्या विहिता सा निःसन्देहमपूर्वैव । किन्तु तदीयं पुस्तकं शास्त्रस्यैतस्यैकांशमेव
स्पृशति । आशास्यत यदेतादृशमुदाहरणमुपलभ्य तदन्ये विज्ञानाचार्या अपरान्
भागान् समादायायुर्वेदादिशास्त्राणां पुनरपि भारतभारतीं साधु विभूष-
यिस्यन्ति, किन्तु साऽऽशा नाद्यापि क्वाप्यङ्कुरितापि लक्ष्यीक्रियते ।

डाक्टरगिरीन्द्रनाथमुखोपाध्यायैरायुर्वेदशास्त्रस्येतिहासं षड्भिर्भागैः प्रकाश-
यितुमारब्धमास्ते । आशास्महे यदा सर्वे भागाः प्रकाशिता भविष्यन्ति
करिष्यन्ति ज्ञानसमृद्धिं सुसम्पन्नामायुर्वेदशास्त्रस्येति । मुखोपाध्यायमहाशय-
सदृशा अन्येपि वदान्यहृदया सरस्वतीसेवनव्रतेन पुनरपि भारतजनन्या मुख-
मुज्ज्वलयन्त्विति सर्वात्मना परमात्मानं परमेश्वरं प्रार्थयामहे ।

पूर्वोक्तनिवेदनाद् दिग्दर्शनदेश्याद् व्यक्तमेवैतद्भवेत् सुधियां यदस्ति विपुलं
भूयिष्ठं कार्यमधुनापि करणीयमायुर्वेदशास्त्र एव । प्रथमं तावत् प्राचीनाना-

मर्वाचीनानां च समीचीनानां ग्रन्थानां सम्यग् मार्गणं तद्विद्भिर्विधेयम् । तदनन्तरमुपलब्धानां प्रकाशनाय प्रयत्नो विधीयेत । एवमादि चिराद् विभावयद्भिस्माभिरनुमोदितमेव प्रकाशनमायुर्वेदग्रन्थानां काशीसंस्कृतपुस्तकमालायाम् ।

यदा च श्रेष्ठिवरिष्ठैः श्रीजयकृष्णदासैः प्रार्थिता वयं काकचण्डीश्वरकल्पतन्त्रं सम्पादयितुं परमसंमदतुन्दिलेन हृदयेन स्वीकृतं तच्चास्माभिः प्रावर्तितश्चास्मदन्तेवासी रामकृष्णशर्मा तत्-कार्यसाहाय्यार्थम् । औदीच्यकुलावतंसानां भिषगग्रेसराणां पण्डित चुन्नीलालशर्मणामयं दौहित्रः । आशास्महे वयमयमेवं समुत्साहितश्चिरं करिष्यति सेवां भारतभारत्या अधीतिबोधाचरणप्रचारणैर्व्यापारैः ।

प्रकाशितेष्वपि नानाविधेषु प्रवर्तमानायामपि समन्ततो गवेषणायां, नेदं तन्त्रं कुत्राद्यापि केनापि प्रकटीकृतमित्यवधार्य प्राणाचार्याणां तदितरेषां धर्मार्थसुखसाधनमायुः कामयमानानामायुर्वेदोपदेशेषु बद्धपरमादराणां च महोपकारायेदं भविष्यतीत्यपि च विचार्य विहितोऽयं यथाशक्ति प्रयत्नो तद्विदां विदुषां पाणिपाथोजपरामर्शमहोत्सवमेनत् प्रापयितुम् ।

अथास्मिल्लघुकाये प्रबन्धे कतिपयानामोषधीनां विलक्षणाः प्रयोगाः समुद्दिष्टाः । अत्रोपवर्णितानामासां सन्ति कियन्त्यो दिव्यौषधयो यासामन्यत्र नामोल्लेखो पि न लोचनगोचरीक्रियते । सन्ति च तदन्या यासां वर्णनमत्रत्यं न प्रचलिताभिधेयोषधेन सम्यग् संवदति । विलसन्ति तदितरा भूयस्यो या अनायासेनैवोपलभ्याः । तासामाकारादिवर्णनमपि स्थले स्थले तथा विशदतयाऽत्र प्रदत्तं वर्तते यथा न भवेद् भ्रमः कोऽपि तासां परिज्ञाने तज्ज्ञानां प्रज्ञावताम् । मंत्रैर्विना न सिध्यन्त्योषधय इति साम्प्रदायिकमतानुरोधेनाऽत्र मन्त्रा अपि यत्र तत्र दत्ताः । प्रयोगा अपि प्रायशो व दुष्कराः । अल्पसाधनानामपि नृणां बहुशः सुखसाध्या एव । अत्रोपनिबद्धां फलश्रुति श्रुत्वा केचन पण्डितंमन्या नासिकामाकुञ्च्य विकल्पयिष्यन्ति यदियमत्युक्तिविजृम्भिता मूढविश्वासोपहिता च । दृश्येतरवस्त्वपलापावलेपानां वास्तविकविज्ञानविरहितमानसानामेव केषांचन चार्वाकचरणानुचारिणां स्यादेवंविकल्पनबद्धपरिकरः प्रज्ञाप्रसरः । वयं तु विश्वासाभावस्य न किमपि कारणं विभावयितुं पारयामः । 'जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः' इति व्यक्तमेवोक्तं योगानुशासने भगवता पतञ्जलिना ।



व्यासभाष्येऽपि तदेव तत्त्वं विशेषतो विशदीकृतम् । प्राकृतजनानामप्यस्त्याभाणकः 'अचिन्त्यः खलु प्रभावो रत्नमन्त्रौषधीनाम्' इति ।

चरकसुश्रुतादिप्रणीतसंहितासु तु दिव्यौषधीनां विचित्रफलोत्पादकत्वं स्पष्टमेवास्ति प्रतिपादितम् । प्रतिदिनमेधमानाभिः प्रतीच्यरासायनिकगवेषणाभिरपि तत्त्वमिदमेव प्रमाणीक्रियते यत् सन्ति विविधा विलक्षणा गुणा द्रव्येषु प्रत्यक्षीकरणसामर्थ्यरहितमनसां नृणामविज्ञाताः परीक्षामपेक्षमाणाः । तदलं पिष्टपेषणप्रायेणानेनालोचनेन ।

इदमत्र तावदवधेयम् । सन्त्यायुर्वेदस्याष्टावङ्गानि । तदुक्तं चरके—

'तस्यायुर्वेदस्याङ्गान्यष्टौ तद्यथा कायचिकित्सा, शालाक्यं, शल्यापहर्तृकं, विषगरवैरोधिकप्रशमनं, भूतविद्या, कौमारभृत्यकं, रसायनानि, वाजीकरणमिति' ।

तेषु रसायनाभिधेयेऽङ्गे तन्त्रमिदं व्यक्तमन्तर्भवति । चरकसंहितायां रसायनानामुपयोगप्रकारं द्वैविध्येन वर्णितं लक्ष्यीक्रियते ।

यथोक्तं तत्रैव—

रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं चैव वातातपिकमेव च ॥

ओषधीनामुपवर्णितदिव्यदेहादिविलक्षणफलप्राप्तिः कुटीप्रावेशिकविधानेनैव भवतीति स्पष्टमेवोक्तमार्षेषु चरकसुश्रुतादिप्रणीतेषु ग्रन्थेषु ।

वातातपिकेन प्रकारेण तु स्वास्थ्यरक्षणं प्रसिद्ध्यति । तद्द्वयोपयुक्ता अधिकारिणस्तत्रैवोक्ताः ।

यथा—

'समर्थानामरोगाणां धीमतां नियतात्मनाम् ।
कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ॥
अतोऽन्यथा तु ये तेषां सौरमारुतिको विधिः ।
ताभ्यां श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥'

स च श्रेष्ठतरः पूर्वो विधिः सत्याक्रोधेत्यादि तत्रोपवर्णितगुणवतामेव सिध्यति ।

यदुक्तं तत्रैव—

'गुणैरेतैः समुदितैः प्रयुंक्ते यो रसायनम् ।

रसायनगुणान् सर्वान् यथोक्तन् स समश्नुते ॥'

अपि च—

यथास्थूलमनिर्वाप्य दोषाञ् शारीरमानसान् ।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥
योगा ह्यायुःप्रकर्षार्था जरारोगनिबर्हणाः ।
मनःशरीरशुद्धानां सिद्ध्यन्ति प्रयतात्मनाम् ॥

तैस्तैर्गुणैर्विरहितो यो मध्यमोऽधमो वाधिकारी स सौरमारुतिकेन विधिनोपयुञ्जानः कल्पोक्तान्यौषधानि यावदायुः स्वास्थ्यमाप्नोति ।

अत्र प्रकाशितेऽस्मिन् तन्त्रे नोक्तमेतदुपयोगविधानद्वयम् । अत एव तज्जिज्ञासूनां हिताय तदिदमस्माभिः संक्षेपेणात्र प्रदर्शितम् ।

सम्प्रत्यस्य ग्रन्थस्य कर्तृत्वविषये किमपि विचारयामः । यथाऽन्येषु तन्त्राभिधानं दधत्सु ग्रन्थेषु भगवतोः शिवयोः सम्वादरूपेण विषयः प्रतिपाद्यते तथैवात्रापि काकचण्डीश्वरकल्पतन्त्रे सर्वासामोषधीनां प्रयोगास्तत्प्रकारेणैव परिकल्पिता दृश्यन्ते ।

यथा च ग्रन्थस्यान्ते प्रोक्तं—

काकचण्डीश्वराख्योऽसौ ग्रन्थस्ते पुरतः प्रिये ! ।
बहुकल्पसमायुक्तः संग्रहेणोदितो मया ॥
प्राग् ब्रह्मणा कृतं तन्त्रं महदस्ति मम प्रिये ।
महद्भिर्योगिभिः सिद्धैरपि तन्नाधिगम्यते ॥
अतः समालोच्य मया बालानां हितकाम्यया ।
तन्त्रमेतन्नवं प्रोक्तं येन यान्ति सुखं जनाः ॥
प्रीत्यैतव च लोकस्य त्वन्नाम्ना ख्यातिमृच्छति ।
मन्नाम्नापि च सर्वत्र तन्त्रमेतद् सुरेश्वरि ! ॥
इदं प्रिये लोकहितार्थमीरितं
श्रीकाकचण्डीश्वरकल्पतन्त्रम् ।
भक्त्या पठेद्यः स न याति दुःखं
बलं च मेधां महदायुराप्नुयात् ॥



इदमप्यन्तिमाच्छ्लोकात् प्रतीयते यदस्य ग्रन्थस्याभिधानं भगवतोः काकचण्डीश्वरस्य काकचण्डीश्वर्यश्च संवादादागतत्वेनैव काकचण्डीश्वरतन्त्रमिति संजातम् । एतदेव काकचण्डीश्वरमततन्त्रावलोकनादपि प्रत्यवसीयते ।

तथाहि—

कृताञ्जलिपुटा भूत्वा कृष्णतारकलोचना ।
**काकचण्डीश्वरी** देवी उवाचेदं तु भैरवी ॥

किन्तु काकचण्डीश्वरनामा कोऽपि प्रसिद्धः सिद्धोऽपि किल बभूव । स च रसविद्याया हठविद्यायाश्च परमाचार्योऽभवदिति तत्तत्सम्प्रदायेषु प्रख्यातमेव । रसरत्नसमुच्चयस्य प्रथमाध्याये रसोत्पत्तिवर्णनप्रसङ्गे रसतन्त्रकाराणां नामानि प्रदत्तानि । तेषु काकचण्डीश्वरस्याभिधानमपि स्पष्टं समुपलभ्यते ।

तथाहि—

रसाङ्कुशो भैरवश्च नन्दी स्वच्छन्दभैरवः ।
मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा ॥
वासुदेव ऋष्यशृङ्गः क्रियातन्त्रसमुच्चयी ।
रसेन्द्रतिलको योगी भालुकी मैथिलाह्वयः ॥
महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः ।
एतेषां क्रियतेऽन्येषां ग्रन्थानालोक्य संग्रहः ॥

तथा च हठयोगप्रदीपिकायां—

श्री आदिनाथ-मत्स्येन्द्र-शाबरानन्दभैरवाः ।
चौरंगी-मीन-गोरक्ष-विरूपाक्ष-विलेशयाः ॥
मन्थानो भैरवो योगी सिद्धिर्बुद्धश्च कंथडिः ।
कोरंटकः सुरानन्दः सिद्धिपादश्च चर्पटिः ॥
कानेरी पूज्यपादश्च नित्यनाथो निरञ्जनः ।
कपाली बिन्दुनाथश्च **काकचण्डीश्वराह्वयः** ॥
अल्लामः प्रभुदेवश्च घोडाचोली च टिण्टिणिः ।
भालुकी नरदेवश्च खण्डः कापालिकस्तथा ॥
इत्यादयो महासिद्धा हठयोगप्रयोगतः ।
खण्डयित्वा कालदण्डं ब्रह्माण्डे विचरन्ति ते ॥

अन्यच्च । रसवैद्यानां सम्प्रदाये सुवर्णादिजारणार्थं काकचण्डीश्वरप्रोक्तं विडमपि प्रसिद्धमेव ।

अत्रास्माकं न कोऽपि विरोधः प्रतिभाति । सर्वेषां शास्त्राणामुत्पत्तिविषये एतादृशमेव किमप्यद्भुतं सर्वत्रैव कर्णगोचरीक्रियते । तत्त्वतस्तु स एव भगवान् सर्वलोकशङ्करः शङ्करो ज्ञानाधिष्ठातृदेवत्वेन सर्वासां विद्यानां परमकारणत्वेन कर्तृत्वं भजत्येव । एवमत्रापि विषये तथैवावमन्तुं समुचितमेव । यदेव पुरा परमकारुणिकेन भगवता भगवत्यै रहसि प्रकटीकृतं, तदेव तदनुग्रहात् समाधिबलेन सम्यक् प्रत्यक्षीकृत्य काकचण्डीश्वरेण वैखर्या साधकजनसमीहितसिद्ध्यर्थं प्रवर्तितमेतत्तन्त्रम् ।

अथ कस्मिन् समये प्रदेशे वा सिद्धेश्वरः काकचण्डीश्वरः प्रादुर्बभूवेति न निर्विवादं निःसन्देहं निर्णेतुं शक्यते । अस्मिन् ग्रन्थे नागार्जुनस्य नामोल्लेखः समुपलभ्यते ।

तथा च इलियालेपकल्पे—

कर्षैकं भक्षयेन्नित्यं क्षुत्पिपासाहरं भवेत् ।
सिद्धयोगमिदं ख्यातं पुरा नागार्जुनोदितम् ॥

आर्यनागार्जुनः प्रायः विक्रमीये तृतीयशतके समभवदिति विदुषां विदितमेव[1] । अतोऽस्मादनुमातुं शक्यते यदयं काकचण्डीश्वरः तृतीयशतकादनन्तरं संजातः । अपरं च यथास्माभिः पूर्वं प्रदर्शितं यदस्य काकचण्डीश्वरस्य नामोल्लेखो वाग्भटेन स्वकीये रसरत्नसमुच्चये विहित इति । रसरत्नसमुच्चयस्य कर्ता वाग्भटस्तु प्रायस्त्रयोदशशतके प्रादुर्बभूव[2] । एतस्मादनुमातुं शक्यते यदयं त्रयोदशशतकात् प्रागेव समभवत् ।

---

१. कालनिर्णयविचारविस्तरस्तु अधःसमुल्लिखितेषु ग्रन्थेषु द्रष्टव्यः—

Keith—Buddhist Philospհy.

Keith—Indian Logic and Atomism.

Vidyabhusana—History of Hindu Chemistry.

२. P. C. Roy—History of Hindu Chemistry.



अस्य ग्रन्थस्य मुद्रापणार्थं पुस्तकमेकं श्रीवैद्यप्रवरैः आयुर्वेदग्रन्थमालासम्पादकैः त्रिविक्रमात्मजैः यादवाचार्यैः प्रदत्तमिति तेषां प्रकाशकः सम्पादकश्च महतीमुपकृतिं सानन्दं स्वीकुरुतः ।

परामर्शादिविविधसाहाय्यं प्रदाय बहूपकृतं परमप्राणेश्वराचार्यैः श्रीजीवानन्दपन्तमहोदयैरिति सस्नेहं स्मारं स्मारं वयमतो विरमामः ।

काशी
वि० सं० १९८६

विदुषां वशंवदः
बटुकनाथ शर्मा एम० ए०

## विषय-सूची



॥ श्रीः ॥

# काकचण्डीश्वरकल्पतन्त्रम्

## 'विद्योतिनी' हिन्दी-व्याख्योपेतम्



### अथापराजिताकल्पः

ओषधी कथिता पूर्वं ब्रह्मणा तु महात्मना।
अपराजिता च लोकेऽस्मिन् विख्याता गिरिकर्णिका ॥ १ ॥

पहले ब्रह्मा जी ने अपराजिता नामक ओषधि जो कि संसार में गिरिकर्णिका नाम से विश्रुत है, कहा है, ( आदि काल में महात्मा ब्रह्मा ने जो अपराजिता नामक ओषधि का वर्णन किया वही संसार में गिरिकर्णिका नाम से विख्यात है ) ॥ १ ॥

पुष्ये समुद्धृता सम्यग् हस्ते चोद्धृत्य वा पुनः।
सूर्याचन्द्रमसोर्ग्रासे मूलमुत्पाट्य यत्नतः ॥ २ ॥

पुष्य अथवा हस्त नक्षत्र में तथा सूर्य और चन्द्र ग्रहण में इसके मूल ( जड़ ) को यत्नपूर्वक उखाड़े ॥ २ ॥

पुष्पकाले च पुष्पाणि मूलान्यादाय बुद्धिमान्।
कृष्णाष्टमीचतुर्दश्योः महादेवस्य सन्निधौ ॥ ३ ॥

बुद्धिमान मनुष्य पुष्प का समय होने पर पुष्पों का ग्रहण करे, अन्य समय में मूल का ग्रहण करे। पुनः महादेव शिव के समीप में कृष्णपक्ष की अष्टमी या चतुर्दशी तिथि को ॥ ३ ॥

शुक्लवासाः शुचिर्भूत्वा कषायपरिवर्जितः।
ततो वटिं च कृत्वा तां छायाशुष्कां च कारयेत् ॥ ४ ॥

पवित्र होकर कषायविरहित श्वेतवस्त्र धारण कर गृहीत ओषधि की बटी बनावे और उसे छाया में सुखावे ॥ ४ ॥

ललाटे तिलकं कृत्वा यं यं पश्यति मानवः ।
दृष्टमात्रेण दुष्टोऽपि कुर्यादाज्ञां स्वदासवत् ॥ ५ ॥

ललाट में तिलक लगाकर मनुष्य जिस किसी को देखेगा, यह दुष्ट भी देखने मात्र से ही अपने दास के समान आज्ञा का पालन करेगा ॥ ५ ॥

सङ्ग्रामे शत्रुसङ्घातेऽकाण्डेऽवार्येप्यनुत्तमे ।
मोहयेत् परसैन्यानि मुखसंस्थे महौषधे ॥ ६ ॥

संग्राम में, अनवसर पर दुर्निवार्य प्रबल शत्रु-संघ ( सेना ) उपस्थित होने पर इस महौषध को मुख में धारण करने मात्र से शत्रुसैन्य मोह के वशीभूत हो जाती है ॥ ६ ॥

अङ्गस्योद्वर्तनं कृत्वा स्वयोन्यां वापि लेपयेत् ।
भूयांसस्तेन जीवन्ति यावज्जीवं न संशयः ॥ ७ ॥

इसका शरीर में उबटन करने से अथवा अपनी योनि में ही लेप करने से सभी प्राणी अधिक काल तक जीवित रहते हैं इसमें सन्देह नहीं है ॥ ७ ॥

ॐ अमृते अमृतप्रभे सर्वसिद्धेश्वरि अमितप्रभे स्वाहा—इति मन्त्रेण सप्तधाभिमन्त्रितं कृत्वा यथोक्तमुपयोजयेत् ।

पूर्वोक्त मन्त्र से सात बार अभिमन्त्रित करके यथानिर्दिष्ट उपयोग करे ।

## अथोच्चटाकल्पः

रसायनं प्रवक्ष्यामि यत्सुरैरपि दुर्लभम् ।
उच्चटेत्योषधी काचिज्जायते पृथिवीतले ॥ १ ॥

देवताओं को भी दुर्लभ रसायन का उपदेश कर रहा हूँ, उच्चटा नाम की कोई ओषधि पृथिवी में होती है ॥ १ ॥

वर्तुलं पर्णमस्याश्च रूपमेवं प्रदृश्यते ।
एकनाला भवेत् सा तु वर्णेनाकृष्णनीलिका ॥ २ ॥

इसका रूप इस प्रकार का दीखता है—पत्ते गोलाकार होते हैं, नाल एक होता है और वर्ण से कुछ कृष्ण या नील वर्ण का होता है ॥ २ ॥



तस्याः पुष्पं भवेद् भुग्नं शुकतुण्डसमप्रभम् ।
कन्दं कूर्मप्रतीकाशं तस्या लक्षणमीदृशम् ॥ ३ ॥

उसका पुष्प सिरे पर दबा हुआ अत एव तोता के रक्तवर्ण चोंच की आकृति का होता है, और कन्द कच्छप के आकार का होता है । यही उसका लक्षण है ॥ ३ ॥

उपर्यारुह्य तस्या अप्यन्तरिक्षं निरीक्षयेत् ।
देवयक्षगणाः सर्वे दृश्यन्ते नात्र संशयः ॥ ४ ॥

उसके ऊपर स्थित ( आसीन ) होकर अन्तरिक्ष ( अगोचर ) वस्तु का भी दर्शन सुलभ होता है, तथा सभी देवता यक्ष प्रभृति दिखलाई देते हैं, इसमें सन्देह नहीं है ॥ ४ ॥

रसश्च द्रवते देवि मधुरश्च विशेषतः ।
साहश्यं सर्वलोहानां सकृल्लेपेन याति सः ॥ ५ ॥

हे देवि ! विशेष करके इससे मधुर रस का स्राव होता है और एक बार लेप करने मात्र से सभी लोह के समान यह हो जाता है ॥ ५ ॥

काञ्चनं कुरुते दिव्यं क्षिप्रं चैव च वह्निना ।
मज्जयित्वाङ्गुलिं तत्र लिहेत् तं तु सकृत् पुमान् ॥ ६ ॥

अग्नि के संयोग से शीघ्र ही दिव्य स्वर्ण में परिणत करता है । उसके रस में अंगुली डुबा कर एक बार मनुष्य उसका प्राशन करे ॥ ६ ॥

विमानानि च सर्वाणि तत्र पत्रस्थिता नराः ।
पश्यन्ति नात्र सन्देह ओषध्यास्तु प्रभावतः ॥ ७ ॥

औषध के प्रभाव से उसके पत्र पर स्थित होकर मनुष्य सभी विमानों को देखते हैं इसमें सन्देह नहीं है ॥ ७ ॥

प्रद्युम्नसदृशं रूपं नागायुतपराक्रमः ।
कान्त्या चन्द्रसमः प्राज्ञो वेगेन पावनोपमः ॥ ८ ॥

बुद्धिमान् इसके प्रभाव से प्रद्युम्न के समान रूप, दश सहस्र ( अयुत ) हाथी के समान पराक्रम, चन्द्रमा के समान कान्ति और वायु के समान वेग प्राप्त करता है ॥ ८ ॥

मेधावी सर्वशास्त्रज्ञो बलीपलितवर्जितः ।
मार्कण्ड इव दीर्घायुः सत्यं सौभाग्यवान् भवेत् ॥ ९ ॥

तथा मेधासम्पन्न सब शास्त्र को जानने वाला, वार्धक्यजन्य वली ( सिकुड़न ) और पलित (श्वेत केश) के विरहित, मार्कण्डेय ऋषि के समान दीर्घायु तथा सौभाग्यशाली होता है, यह सत्य है ॥ ९ ॥

अथ वै पत्रपुष्पाणि फलमूलं तथैव च।
सूक्ष्मचूर्णं प्रकुर्वीत प्रतिवारं च दापयेत्[1] ॥ १० ॥

इसके पत्र पुष्प और फल-मूल का महीन चूर्ण बनावे और हर वार उसका छेदन करते हुए चूर्ण बनावे ॥ १० ॥

छेदे दाहे कर्षणे च हेमीभवति निश्चितम्।
शूलपत्राणि लेपेन बेधयेन्नात्र संशयः ॥ ११ ॥

छेदन, दहन और विलेखन से निश्चय ही यह स्वर्ण होता है। और इसके लेप से लौहपत्र का वेध होता है इसमें सन्देह नहीं है ॥ ११ ॥

काञ्चनं कुरुते दिव्यं त्रिभिर्दोषैर्विवर्जितम्।
अथैतदोषधिस्थानं कथयामि समासतः ॥ १२ ॥

तीनों दोषों से रहित दिव्य स्वर्ण होता है। अब संक्षेप से इस औषधि का उत्पत्ति-स्थान कहते हैं ॥ १२ ॥

कुबेरनगरे रम्ये शङ्खतीर्थे तथैव च।
हिमालये गिरौ रम्ये तथा जालन्धरे गिरौ ॥ १३ ॥

रम्य कुबेर नगर अलकापुरी में, शंखतीर्थ में रम्य हिमालय पर्वत पर तथा जालन्धर पर्वत पर ॥ १३ ॥

सव्ये विन्ध्ये महानागे नरनारायणाचले।
चन्द्रकान्तगिरौ चापि हेमपुष्टे च सुस्थले ॥ १४ ॥

दक्षिण में विन्ध्य महापर्वत पर, नरनारायण नामक पर्वत पर चन्द्रकान्त पर्वत पर तथा हेमपुष्ट पवित्र स्थल पर ॥ १४ ॥

एषु स्थानेषु विज्ञेया ह्योषधी सुरपूजिता।
विजया नाम विख्याता त्रिषु लोकेषु सुन्दरी ॥ १५ ॥

यह देवताओं से पूजित औषध तीनों लोक में विजया नाम से प्रसिद्ध सुन्दर औषध उपर्युक्त स्थानों में जानना चाहिए ॥ १५ ॥

---

१. दापयेत्—दाप् लवने ( लूञ् छेदने; इत्यस्मात् लवनम् )।



आयुष्यं साधकेन्द्रस्य ददाति सुरपूजिता।
कान्तजीर्णं रसं कृत्वा हेमजीर्णं तया युतम् ॥ १६ ॥

साधकशिरोमणि की यह देवताओं से वन्दित औषध आयुष्य देती है। कान्त ( लौहविशेष ) जीर्ण रस को करके और उससे ( उच्चटा से ) युक्त हेमजीर्ण करते हैं ॥ १६ ॥

उच्चटाया रसं दत्त्वा रसकर्षं विमर्दयेत्।
पिबेत् मधुघृतैर्युक्तं निद्रा भवति तत्क्षणात् ॥ १७ ॥

उच्चटा का रस देकर कर्ष परिमित पारद का मर्दन करे और मधुर-घृत के अनुपान से पान करे तो तुरन्त निद्रा होती है ॥ १७ ॥

उपयुक्ते ततश्चूर्णे तद्योगाच्च जगत्यसौ।
मासैकेनैव देवेशि संशयान् सर्वतस्त्यजेत् ॥ १८ ॥

संसार में वह ( साधक ) उपयुक्त चूर्ण का उसी के योग से एक मास पर्यन्त ही (सेवन करने से) सभी प्रकार के संशय से रहित हो जाता है ॥१८॥

स्वयं निगृह्यते सिद्धिः सूर्यतेजस्समप्रभः।
त्रासयेच्च जगत्सर्वं सयक्षोरगराक्षसम् ॥ १९ ॥

स्वयं सिद्धि उसका ग्रहण करती है, और सूर्य के तेज के समान कान्ति वाला वह यक्ष, उरग और राक्षस से युक्त सम्पूर्ण संसार को त्रस्त करता है ॥१९॥

अमरानपि निर्जित्य बलेन कुलिशाधिपः।
हत्वा विद्याधरान् सर्वान् ये चान्ये जयकाङ्क्षिणः ॥ २० ॥

बल में वज्राधिपति इन्द्र के समान वह सभी देवताओं को भी जीत करके, तथा सभी विद्याधरों को तथा और जो कोई जय की इच्छा रखने वाले हैं—सबको मारता है ॥ २० ॥

स्वयमेव भवेदिन्द्रः कल्पस्यास्य प्रभावतः।

अधिक क्या इस कल्प के प्रभाव से स्वयं इन्द्र ही हो जाता है।

अथवा सेटकं सूताच्चतुर्थांशं निधाय च ॥ २१ ॥
उच्चटाया रसं दत्त्वा मर्दयेत् पाणिमध्यतः।
मर्दिते रवितापेन रसो दिव्यौषधीबलात् ॥ २२ ॥

अथवा पारद से चतुर्थांश सेटक लेकर उसमें उच्चटा का रस देकर दोनों

हाथ के बीच में रखकर मर्दन करें। फिर इस दिव्य औषधि के बल से सूर्य-ताप के योग से मर्दन करने पर यह रस ॥ २२–२२ ॥

भिनत्ति सर्वलोहांश्च लक्षांशेन वरानने।
अथवा तां क्षिपेद्वक्त्रे सोऽदृश्यो भवति क्षणात् ॥ २३ ॥
व्रजेच्च किन्नरं लोकं तत्रादौ जायते नृपः।

अपने लक्ष अंश से हे पार्वती, सभी लौह का भेदन करता है अथवा उसको मुख में रखे तो वह क्षण मात्र में अदृश्य हो जाता है और किन्नर लोक में जाता है, और वहाँ पहले राजा होता है ॥ २३ ॥

## अथ नागदमनीकल्पः

नागस्य दमनी नाम्ना विख्याता भुवनत्रये।
लक्षणं तस्य वक्ष्यामि भद्रे गोत्रेशसुन्दरि ॥ १ ॥

नागदमनी नामक तीनों लोक में विख्यात एक ओषधि है। हे प्रिय पर्वतनन्दिनी! उसका लक्षण कहता हूँ ॥ १ ॥

कृष्णनाला भवेत् सा तु पत्रं ताम्बूलसन्निभम्।
पीतपुष्पा भवेदेवं लक्षणैर्लक्षयेन्नरः ॥ २ ॥

उसका नाल कृष्ण वर्ण का, पत्ता पान के पत्ता के समान और फूल पीत वर्ण का होता है, इन लक्षणों से उसे मनुष्य पहचान करे ॥ २ ॥

नागानां दमनी यस्मान्नागदमनीति विश्रुता।
माङ्गल्यं च पवित्रं च श्रियं चापि धृतिं स्मृतिम् ॥ ३ ॥
विद्यां कीर्तिं च मेधां च त्रैलोक्ये च श्रुतिस्मृतीः।
उपबृंहयति क्षिप्रं सहस्रायुर्भवेन्नरः ॥ ४ ॥

नागों (सर्पों) का दमन करती है अत एव नागदमनी इस नाम से प्रसिद्ध है। यह तीनों लोक में मांगल्य, पवित्र, श्री, धृति, स्मृति, विद्या; कीर्ति, मेधा और श्रुति-स्मृति को शीघ्र ही बृंहण (वधन) करती है और मनुष्य सहस्र वर्ष तक दीर्घजीवी होता है ॥ ३–४ ॥

दारिद्र्यं नाशयेदाशु सौभाग्यं कुरुते सदा।
शान्तिदा पुष्टिदा चैव सर्वकर्मकरी शुभा ॥ ५ ॥



शीघ्र ही दरिद्रता का नाश करती है, सदा सौभाग्य करती है, शान्ति को देने वाली, पुष्टि देने वाली, सभी कर्म को करने वाली और शुभ है ॥ ५ ॥

रणे राजकुले द्यूते व्यवहारे पराजिते।
ओषधिं श्रवणे कण्ठे हस्ते शिरसि धारयेत् ॥ ६ ॥

रण में, राजसमीप में, द्यूत में, व्यवहार में, पराजय में इस ओषधि को कान, कण्ठ, हस्त और शिर पर धारण करे ॥ ६ ॥

बाहुभ्यां मुद्रिके वापि कर्ण्यां वा धारयेच्छुभाम्।
वशीकरोति सर्वांश्च रतिपुष्टिविवर्धनी ॥ ७ ॥

दोनों बाहुओं में, मुद्रिका में, कान में, इस शुभ ओषधि को धारण करे तो यह रति और पुष्टि की वर्धन करने वाली ओषधि सभी को वश में करती है ॥ ७ ॥

मृत्यूनां विद्धि शमनो यत्र तिष्ठति सा गृहे।
नाग्निप्रवेशं तस्यैव जलधौ च महाहवे ॥ ८ ॥
व्याघ्रराक्षससिंहेषु विवादे शत्रुसङ्कटे।
न भयं विद्यते तस्य यस्य कण्ठे सदीश्वरी ॥ ९ ॥

जिस घर में ओषधि रहती है, वहाँ उसे मृत्यु का शमन करने वाली समझें। अग्नि प्रवेश में, समुद्र में, अत्युत्कट संग्राम में, व्याघ्र, राक्षस और सिंह के सम्मुख, विवाद में तथा शत्रु-संकट होने पर जिसके कण्ठ में यह उत्कृष्ट ईश्वर स्वरूप ओषधि रहती है उसे भय नहीं रहता है ॥ ८–९ ॥

शङ्खचक्रासिवर्ध्रेण नागपाशविमोक्षणे।
शूलधारास्तवापीयं मोक्षयेदीश्वरी धृता ॥ १० ॥

वर्ध्र—सीसवरत्रयोः—हैमः।

वरत्रा—चर्ममयरज्जुः (अमरकोशः शूद्रवर्गः)।

वरत्रा—गजमध्यबन्धनम् (अमरकोशः क्षत्रियवर्गः)।

शंख; चक्र, असि और वर्ध्र (बंधना, हाथी बाँधने की रज्जुविशेष) से नागपाश के छुड़ाने में, हे भगवति! यह तुम्हारी ईश्वरस्वरूपिणी ओषधि (नागदमनी) धारण करने से शूलधारा के समान मुक्त करती है ॥ १० ॥

ईश्वरी हरते क्षिप्रं विषं स्थावरजङ्गमम्।
विषाण्युपविषाण्येवं दृष्ट्वा नश्यन्ति तत्क्षणात् ॥ ११ ॥

ईश्वर स्वरूपिणी यह ओषधि स्थावर और जंगम विष को शीघ्र ही नष्ट करती है, इसी प्रकार अन्य विष उपविष भी इसके देखने मात्र से उसी समय नष्ट होते हैं ॥ ११ ॥

दोषं सा वार्श्चिकं सार्पं मोचयेद्विषमुत्तमम् ।
अपचीगण्डमालादिपिडकादिव्रणेषु च ॥ १२ ॥
रोहिण्यां चैव न भयं यस्य कण्ठे सदीश्वरी ।
एतान्यन्यानि ऋषयो ज्ञात्वाऽऽसन् निर्भया विषात् ॥ १३ ॥

बिच्छू का दोष तथा सर्प का विष वह छुड़ा देती है। अपची, गण्डमाला आदि तथा पिडिका आदि व्रणों में और रोहिणी में जिसके गले में यह सौभाग्यवती औषध विद्यमान रहती है उसको भय नहीं है, इसको तथा अन्य इसी प्रकार की औषधों को जानकर ऋषि लोग विष से निर्भर थे ॥ १२-१३ ॥

वातगुल्मोदरं हत्वा हृद्रोगं च विनाशयेत् ।
भक्षयेद्वर्षमेकं च घृतेन मधुना सह ॥ १४ ॥

वातगुल्म नामक उदररोग को नष्ट करके, हृद्रोग का भी नाश करती है। घृत और मधु के साथ एक वर्ष पर्यन्त सेवन करे ॥ १४ ॥

सर्वरोगविनिर्मुक्तो वलीपलितवर्जितः ।
जीवेद्वर्षसहस्रं तु महातेजा महाबलः ॥ १५ ॥

सभी रोग से निर्मुक्त, वली और पलित से रहित अतितेज सम्पन्न और महाबलशाली सहस्र वर्ष पर्यन्त जीवित रहे ॥ १५ ॥

पञ्चवर्षप्रयोगेण लक्षायुर्जायते नरः ।
नवनागबलो भूत्वा मृत्युमात्मेच्छया जयेत् ॥ १६ ॥

पाँच वर्ष तक इसके प्रयोग से मनुष्य लक्ष वर्ष की आयु वाला होता है। नूतन हाथी के बल के समान बल-सम्पन्न होकर अपनी इच्छा से मृत्यु को जीत सकता है ॥ १६ ॥

सर्वव्याधिविनिर्मुक्तः सर्वकर्मविवर्जितः ।

सभी व्याधि से विरहित और सभी कर्म से मुक्त ( लक्ष वर्ष तक जीवित रहे )।



मधुना सह संयुक्तं लिङ्गे लेपं तु कारयेत् ॥ १७ ॥
अवश्यं सा भवेद्वश्या यावद्यौवनसंयुता ।

मधु के साथ मिलाकर लिंग पर लेप करे तो अवश्य यौवन-सम्पन्न ( नारी ) वश में होती है ॥ १७ ॥

घृतेन सह संयुक्तं बन्ध्यात्वं नश्यति ध्रुवम् ॥ १८ ॥

घृत के साथ मिलाकर ( योनि में लेप करने से ) तत्क्षण वन्ध्यात्व विनष्ट होता है ॥ १८ ॥

नागश्चाभ्रकसूतौ च ग्राह्यं गृह्णन्ति तत्क्षणात् ।
मर्दितो विधिवत्सूतः सर्वलोहान् भिनत्ति च ॥ १९ ॥

ग्राह्य प्रमाण में नाग ( सीस ), अभ्रक और पारद का तत्क्षण ग्रहण करता है। विधिवत् इसके योग से मर्दित पारद सभी लोहों का भेदन करता है ॥१९॥

नागवङ्गौ समौ कृत्वा तत्समं सूतकं क्षिपेत् ।
शनैर्यावद् ग्रसेयुस्ते नागिन्याः स्वरसेन तु ॥ २० ॥
मर्दयेद्रसमध्ये तु तावद् भ्रमरसंनिभम् ।
ततस्तत्षोडशांशं तु दीप्यं काञ्चनवर्णकम् ॥ २१ ॥
पुनर्नवारसेनैव लवणेन तु दापयेत् ।
अथ तत् सप्तरात्रेण चाभ्रकं ग्रासयेत् पुनः ॥ २२ ॥

नाग और बंग को समान प्रमाण में लाकर उन दोनों के समान पारद डाले, शीघ्र ही जब तक उसका ग्रास होता है, तभी रस के मध्य में नादमनी के स्वरस से जब तक भ्रमर के समान न हो जावे तब तक मर्दन करे। इसके बाद उसका सोलहवाँ भाग चमकदार-कांचन वर्ण को पुनर्नवा के रस से और लवण से छेदन करे। तब वह सात रात्रि में अभ्रक का ग्रास करता है॥२०-२२॥

शिरस्स्फोटिरसेनैवमपामार्गरसेन च ।
निर्गुण्ड्याः स्वरसो ग्राह्यः स्नुहीक्षीरं तथैव च ॥ २३ ॥
तक्रेण लवणं चैव यथेष्टं मर्दयेत् पुनः ।
ईश्वरीरससंयुक्तमभ्रकं ग्रासयेत् पुनः ॥ २४ ॥

अथवा शिरस्स्फोटि के रस से और अपामार्ग के रस से छेदन करे।

निर्गुण्डी का रस ले तथा स्नुही का दूध ले और मट्ठा से लवण का यथेष्ट मर्दन करे; पुनः ईश्वरी (नागदमनी) रस से युक्त अभ्रक का ग्रास होता है ॥२३-२४॥

ईश्वरीरहितं देवि न किञ्चित् कर्म सिध्यति ।
न हि कान्ताभ्रकादीनि न च नागरसावपि ॥ २५ ॥
रसतत्त्वं प्रयान्त्यत्र न च सिद्ध्यन्ति साधकाः ।

हे देवि ! ईश्वरी ( नागदमनी ) से रहित कोई कर्म नहीं सिद्ध होता है । कान्त और अभ्रकादि तथा नाग और रस भी रसवत्ता को नहीं प्राप्त होते तथा साधक भी सिद्ध नहीं होते हैं ॥ २५ ॥

पारदः षड्बलो ग्राह्यश्चाभ्रकात् षड्बलं तथा ॥ २६ ॥
नागिन्याश्च रसो ग्राह्यो ह्यजामूत्रेण मर्दयेत् ।
क्राथयेद्वह्निना प्राज्ञः खल्वे पिष्यादनन्तरम् ॥ २७ ॥

षड्गुण पारद का ग्रहण करे, और अभ्रक से षड्गुण नागदमनी का स्वरस ग्रहण करे और अजामूल से मर्दन करे । उसके बाद अग्नि से क्राथ करे । फिर खल्व में पीसे ॥ २६-२७ ॥

एवं कुर्यादहोरात्राद् गुटिकां तस्य सुन्दरि ।
क्रमाद्भावनया ह्येतत् सर्वलोहांश्च वेधयेत् ॥ २८ ॥

हे सुन्दरि ! इस प्रकार दिन-रात में उसकी गुटिका ( गोली ) बनावे, क्रमशः इस प्रकार भावना से यह सभी लोहों का वेध करता है ॥ २८ ॥

एवं सञ्चारितं कृत्वा सप्ताहाच्छ्रुतवेधिकः ।
सप्तसप्ताहकेनापि लक्षवेधी भवेन्नरः ॥ २९ ॥

इस प्रकार संचारित करके एक सप्ताह से श्रुतवेधी होता है और सात सप्ताह में मनुष्य लक्षवेधी होता है ॥ २९ ॥

अष्टमेऽपि तु सप्ताहे स्पर्शवेधी भवेन्नरः ।
नवमे सप्तके प्राप्ते चोद्योतनकरो भवेत् ॥ ३० ॥

अष्टम सप्ताह में मनुष्य स्पर्शवेधी होता है । नवम सप्ताह में उद्योतन करने वाला होता है ॥ ३० ॥



दशमे सप्तके प्राप्ते स महारस उच्यते ।
महारसे तु सम्प्राप्ते को न मुञ्चति बन्धनात् ॥ ३१ ॥

दशम सप्ताह में वह महारस कहलाता है, महारस हो जाने पर कौन बन्धन से मुक्त नहीं होता ॥ ३१ ॥

---

## अथ वज्रवल्लीकल्पः

वज्रस्य सदृशैः पत्रैर्ज्ञेया वज्राह्वयौषधी ।
अङ्गुष्ठपर्वमात्रं तु पयसाऽस्याश्च भक्षयेत् ॥ १ ॥

वज्र के समान पत्र वाली वज्रवल्ली नामक ओषधि है । इसका अङ्गुष्ठ के पर्व के समान खण्ड दुग्ध से भक्षण करे ॥ १ ॥

विरेकवमने कृत्वा कट्वम्लादीन् विवर्जयेत् ।
सप्तरात्रप्रयोगेण हन्ति कुष्ठानशेषतः ॥ २ ॥

विरेचन और वमन करने के उपरान्त कटु अम्ल आदि अपथ्य रस को छोड़ कर सात रात्रि तक प्रयोग करने से यह सभी कुष्ठों को नष्ट करती है ॥२॥

द्वितीयसप्तरात्रं च तेनैव विधिना कृतम् ।
महोदरं च गुल्मं च मण्डूकाकृतिमौदरम् ॥ ३ ॥
गण्डमालादिमन्यांश्च हन्ति सर्वामयानपि ।
प्रणश्यन्ति यथा सूर्यकान्त्यान्धतमसां गणाः ॥ ४ ॥

द्वितीय ( अन्य ) सप्त रात्रि के उसी विधि के प्रयोग से महोदर, गुल्म, मण्डूक सदृश उदररोग, गण्डमालादि तथा अन्य सभी रोगों को नष्ट करती है जैसे सूर्य की कान्ति से अन्धतम पुंज विनष्ट होता है ॥ ३-४ ॥

तृतीयसप्तरात्रेण मेधावी प्रियदर्शनः ।
सर्पवत् कञ्चुकं दत्त्वा जीवेद्वर्षशतत्रयम् ॥ ५ ॥

तृतीय सप्त रात्रि के प्रयोग से मेधासम्पन्न और श्रीसम्पन्न सर्प के समान कंचुक छोड़ता हुआ तीन सौ वर्ष पर्यन्त जीवित रहता है ॥ ५ ॥

न चैव परिहारोऽस्ति भक्ष्यभोज्यान्नसङ्गमे ।
भक्ष्य, भोज्य और अन्न-संगम में परिहार नहीं है ।

किमत्र चित्रं यदि वज्रवल्ली
सशर्करा गोघृतसंयुता च।
मासेन रोगान् सकलान्निहन्ति
द्विमासतो यच्छति यौवनश्रियम् ॥ ६ ॥

वज्रवल्ली एक मास पर्यन्त शर्करा और गौ के घृत के साथ सेवन करने से सभी रोगों को नष्ट करती है तथा दो मास सेवन करने से यौवन को प्रदान करती है इसमें कोई आश्चर्य नहीं है ॥ ६ ॥

---

## अथ वज्रदन्तीकल्पः

दृष्टा सञ्जीविनी काचित् सतां भाग्यततिः क्षितौ।
आषाढकाले प्रथमे पुनर्जाता सपल्लवा ॥ १ ॥

पृथ्वी में जीवन प्रदान करने वाली सज्जनों की भाग्यपुंजस्वरूपा कोई ओषधि देखी गई है जो कि प्रथम आषाढ के समय में पल्लवयुक्त होती है ॥१॥

परीक्ष्य सम्यक् तच्चर्म निशि वक्त्रेण धारयेत्।
एकविंशदिनैस्तस्य दन्ता नैव पतन्ति च ॥ २ ॥

अच्छी प्रकार पहचान कर उसका छिलका ( चर्म ) मुख में धारण करे। इक्कीस दिन तक इस प्रकार धारण करने से दाँत कभी नहीं गिरते ॥ २ ॥

तन्मूलसाधितं क्षीरं पिबेद्वीर्यविवर्धनम्।
अर्धांशेन जटाक्षीरे क्षरति त्वरया पिबेत् ॥ ३ ॥

उसके मूल से सिद्ध दुग्ध पीने से वीर्य की वृद्धि होती है। अर्धांश जटा सृत दुग्ध का पान करने से शुक्रवृद्धि होती है, शीघ्रता से पान करे ॥ ३ ॥

एकविंशदिनैर्मर्त्यो सर्वरोगाद्विमुच्यते।
अदृश्यो मण्डलेनैव कामरूपी त्रिमासतः ॥ ४ ॥

इक्कीस दिन तक सेवन करने से मनुष्य सभी रोग से मुक्त होता है। तीन मास तक सेवन करने से मण्डल से इच्छानुसार रूप धारण करने वाला अदृश्य हो सकता है ॥ ४ ॥



शत्रुबाणगणो नश्येत् षण्मासात्पण्डितेन सः।
अषण्ढावयवो भूत्वा सेचनाद्वर्ततेे सदा ॥ ५ ॥

छह मास तक सेवन करने से शत्रु का बाणसमूह नष्ट होता है। सेचन करने से पुंस्त्वसम्पन्न अवयव से युक्त चिरकाल तक वर्त्तमान रहता है ॥ ५ ॥

मृतसञ्जीविनी भूत्वा तद्रसान्तश्च पारदम्।
वज्रं निक्षिप्य मूषायां ध्माते वज्रमृतिप्रदम् ॥ ६ ॥

मृत सञ्जीवन करने वाली है, उसके रस में पारद मिश्रित कर, वज्र डालकर मूषा में आँच ( धमन ) देने से वज्र मृत होता है ॥ ६ ॥

वज्रदन्तीभवं वक्त्रे न्यसेद्यस्तु फलं पुमाम्।
वेगस्तम्भो भवेत्तेन विघातश्चैव वह्निना ॥ ७ ॥

वज्रदन्ती का फल जो मनुष्य मुख में रखता है, उससे वेगस्तम्भ होता है ॥ ७ ॥

तन्मूलान्तरिताकारः पश्यत्यम्बरचारिणः।
तिलपुष्परसः प्रस्थो धामार्गवरसोत्तरः ॥ ८ ॥
निशापुष्परसः प्रस्थस्त्रितयेन समन्वितम्।
विपाचितं तु तैलं तदभ्यङ्गात् सप्तवासरैः ॥ ९ ॥
कमनीयं स्निग्धनीलं कुन्तलं जायते ध्रुवम्।
अत्यन्तदीर्घमखिलनारीजनमनोहरम् ॥ १० ॥

इसके मूल के ओट में अपने शरीर को छिपाकर आकाशचारी ( देव ) आदि को देखता है। तिलपुष्प का रस एक प्रस्थ, धामार्गव का रस एक प्रस्थ, निशापुष्प का रस एक प्रस्थ, इन तीनों रसों से पकाये तेल का सात दिन तक अभ्यंग करने से सुन्दर, चिक्कण नील, अत्यन्त लम्बा, सम्पूर्ण स्त्रियों के मन को वश में करने वाला ( केश ) निश्चित ही होता है ॥ ८–१० ॥

---

## अथ हस्तिकर्णीकल्पः

शुक्लपक्षे तु पञ्चम्यां पौर्णमास्यां समाहरेत्।
रेवतीरोहिणीपुष्यश्रवणैश्च समन्विते ॥ १ ॥

रेवती, रोहिणी, पुष्य और श्रवण से युक्त शुक्ल पक्ष की पञ्चमी और पूर्णिमा तिथि को ग्रहण करें ॥ १ ॥

अभ्यर्च्य गन्धपुष्पाद्यैः सह मूलं विचूर्णयेत् ।
तोयं काञ्जिकतक्रैश्च दधिक्षीरयुतैः क्रमात् ॥ २ ॥
पृथक् पृथक् सप्तवारं घृतेन सहितं पिबेत् ।
पञ्चाशद्दिवसैस्तेन वज्रकायो भवेन्नरः ॥ ३ ॥

गन्ध-पुष्प आदि से पूजा करके मूल युक्त ओषधि का चूर्ण करे और घृत के साथ क्रमशः जल, कांजी, तक्र, दधि और क्षीर से पृथक् पृथक् सात बार पान करे। इस प्रकार पचास दिन तक सेवन करने से मनुष्य वज्र के समान देह वाला होता है ॥ २-२ ॥

तुरगोपमवेगः स्याज्जीवन्मुक्तोऽतिदीप्तिमान् ।
सहस्रमायुराप्नोति वलीपलितवर्जितः ॥ ४ ॥

अश्व के समान वेग वाला, जीवित रहते हुये भी मुक्त, अधिक प्रकाशमान ( मनुष्य ) होता है तथा वली ( झुर्री ) और केश की श्वेतता से विरहित सहस्र वर्ष की आयु प्राप्त करता है ॥ ४ ॥

यथेष्टं भोजनं कुर्वन् विचरेद् भुवि मानवः ।
एवमापाद्य वातघ्नं काञ्जिकेन समीरजित् ॥ ५ ॥

वायु को वश में रखने वाला ( मनुष्य ) इस प्रकार से वातघ्न इस औषध का कांजी के साथ सेवन कर इच्छानुसार भोजन करता हुआ मनुष्य पृथ्वी पर भ्रमण करे ॥ ५ ॥

जलोदरं तु तक्रेण दध्ना गुल्मं समीरजम् ।
क्षीरेण कुष्ठरोगघ्नमाज्येन सकलामयान् ॥ ६ ॥
मधुना सर्वदोषांश्च नानारोगसमन्वितान् ।

मट्ठा से जलोदर, दधि से वातोत्थ गुल्म, क्षीर ( दूध ) से कुष्ठ रोग, घृत से सभी रोग और मधु से विभिन्न रोग से युक्त सभी दोषों को नष्ट करता है ॥ ६ ॥



अथ प्रयोगः—

ॐ चौरदृष्टिनिदष्टे स्वाहा ।
मन्त्रेणानेन शुद्धात्मा सप्तवारं तु मन्त्रयेत् ॥

प्रयोग इस प्रकार है :—
इस मन्त्र से पवित्रात्मा ( पुरुष ) सात बार अभिमन्त्रित करे ।

मन्त्रान्तरम्—

ॐ अमृते अमृतोद्भवे अमृतकुण्डिनि स्वाहा सर्वौषधीनां रक्षां कुरु कुरु स्वाहा । अयमधिवासनमन्त्रः ।

द्वितीय मन्त्र :—
यह अधिवासन मन्त्र है ।

अन्यो मन्त्रः—

अमृतोद्भवायामृतं मे कुरु महौषधि सत्यं तेऽस्तु नमो नमः ।
अनेन मन्त्रेण सप्तवारं भक्षयेत् ।

इस मन्त्र से सात बार भक्षण करे ।

सोमवारे त्रयोदश्यां सहिते भानुरश्मिभिः ।
विशोष्य चूर्णयेन्नालाञ्जलकन्दसमुद्भवान् ॥ ११ ॥

सूर्य की किरणों से युक्त दिन में जब कि सूर्य की किरणें सम्यक् अव्यवहित प्रकाशमान हों सोमवार की त्रयोदशी तिथि में जलस्थित कन्द से उत्पन्न नाल को सुखा कर चूर्ण करे ॥ ११ ॥

सूक्ष्मचूर्णं प्रतिदिनमादाय त्रिफलारसैः ।
मिश्रितं पञ्चलोहेन पञ्चनिष्कसमन्वितम् ॥ १२ ॥

पञ्च लौह से मिश्रित पाँच तोला परिमित सूक्ष्म चूर्ण को प्रतिदिन त्रिफला के रस से ग्रहण करे ॥ १२ ॥

सेवयेन्मासमात्रं तु यावत् संवत्सरं च तत् ।
ततो ब्रह्मायुषं जीवेद् गजवद्वीर्यवान् सुधीः ॥ १३ ॥

एक मास पर्यन्त अथवा एक वर्ष पर्यन्त सेवन करे तो ब्रह्मा की आयु पर्यन्त हाथी के समान वीर्यसम्पन्न विद्वान् पुरुष जीवित रहे ॥ १३ ॥

विध्येश्वररसः प्रोक्तो लोकानां हितकाम्यया।
भुक्त्वा समूलं सघृतं सक्षौद्रं पिप्पलीयुतम् ॥ १४ ॥

यह विध्यश्वर रस प्राणियों के हित की कामना से कहा गया है। मूल सहित उस औषध को घृत, मधु और पिप्पली से युक्त भक्षण करके ॥ १४ ॥

सङ्क्लिप्य तत्र संमर्द्य विधाय च मृदा ततः।
निक्षिपेदायसे पात्रे पुटेदेतद्गजे पुटे ॥ १५ ॥

वहाँ (खरल में) उसे (औषध को) मर्दन करके मिट्टी का लेप करे पुनः लौहपात्र में रखकर गजपुट में फूँक देवे ॥ १५ ॥

अथ तत्प्रत्यहं जप्त्वा शतायुस्तन्निषेवणात्।

अनन्तर प्रतिदिन पूर्वोक्त मन्त्रों का जप करे और उसका सेवन करने से मनुष्य सौ वर्ष की आयु प्राप्त करता है।

हरीतकीतरुस्तद्वन्मार्कवं त्रिफलान्वितम् ॥ १६ ॥
ब्राह्मीफलं महीधात्रीफलं चैव विमर्दयेत्।
क्षीरेणालोड्य निष्पीड्य दशरात्रमतन्द्रितः ॥ १७ ॥

उसी भाँति हरीतकी वृक्ष, आक वृक्ष, त्रिफला के वृक्ष (पृथक् पृथक्), ब्राह्मी फल और महाधात्री फल का आलस्य त्याग कर दश रात्रि पर्यन्त दूध से आलोडन और निष्पीडन कर मर्दन करे ॥ १७ ॥

प्रियं मुहूर्तमन्विष्य भक्षयेत् प्रातरुत्थितः।
एतत्सेवनमात्रेण गात्रं तु कनकायते ॥ १८ ॥

बाद में उत्तम उपयुक्त मुहूर्त का अन्वेषण करके प्रातःकाल उठते ही भक्षण करे। इसके सेवन करने मात्र से देह स्वर्ण के समान कान्ति-सम्पन्न हो जाता है॥

अनेनैव प्रयोगेण भक्षयेद्बलवान् भवेद्।
मन्वादियुगपर्यन्तं वर्तते लोकपूजितः ॥ १९ ॥

इसी प्रयोग से भक्षण करने से मनुष्य बलवान् होता है और प्राणियों से पूजित होकर मनु आदि के युग पर्यन्त वर्तमान रहता है ॥ १९ ॥

आरग्वधं समूलं च तद्वदेव विनिर्दिशेत्।

समूल आरग्वध (अमलतास) का भी उसी प्रकार विधान है।

---



## अथ महानीलीकल्पः

कृष्णाभ्रकं महानीलीं मधुना सह संयुताम्।
आलोड्य धारयेन्मासं स्निग्धे भाण्डे प्रयत्नतः ॥ १ ॥

कृष्णाभ्रक, महानीली को मधु के साथ मिलाकर चिकने पात्र में अच्छी प्रकार से एक मास पर्यन्त रक्खे ॥ १ ॥

सुदिने भक्षयेत् पश्चाद्बिडालपदमात्रकम्।
कृष्णाभ्रकमहानीलीगुडुचीमुसलीमधु ॥ २ ॥
समांशं मेलयेद्धीमान् भक्षयेत्सुदिने नरः।
संवत्सरप्रयोगेण वृद्धोऽपि तरुणायते ॥ ३ ॥
मेधावी बलसंयुक्तो जीवेद्वर्षशतत्रयम्।

शुभमुहूर्त में बिडाल (बिलाव) के पद के (कर्ष) परिमाण में भक्षण करें। कृष्णाभ्रक, महानीली, गुडूची, मुसली और मधु को समप्रमाण में मिलाकर बुद्धिमान् पुरुष शुभ मुहूर्त में भक्षण करें। इसके एक वर्ष के प्रयोग से वृद्ध भी युवा के समान हो जाता है। मेधावी, बलसम्पन्न और तीन सौ वर्ष पर्यन्त जीवित रहने वाला होता है ॥ २-३ ॥

कृष्णाभ्रकं महानीलीं कुमारीकाकजङ्घयोः ॥ ४ ॥
मूलानि बहुमूल्यानि(?)समभागानि मेलयेत्।
मधुना सर्पिषालोड्य सप्तरात्रं विधारयेत् ॥ ५ ॥

कृष्णाभ्रक, महानीली, कुमारी (घृतकुमारी) और काकजंघा के बहुमूल्य मूल को सम प्रमाण में लेकर मधु और घी से आलोडित कर सात रात तक धारण करें ॥ ४-५ ॥

देहशुद्ध्यै शुभे वारे भक्षयेत् क्षीरभोजनम्।
वलीपलितनिर्मुक्तो वर्षयोगेन जायते ॥ ६ ॥

इस योग का देह-शुद्धि के लिए शुभ वार में गौ के दुग्ध का आहार करते हुए भक्षण करें तथा एक वर्ष के प्रयोग से वली (झुर्री) और पलित से रहित मनुष्य होता है ॥ ६ ॥

गोरोचनं महानीलीं प्रियङ्गुं शङ्खपुष्पिकाम्।
गृहीत्वा श्रवणर्क्षे तु समस्रोताम्बुना सह ॥ ७ ॥

गोरोचन, महानीली, प्रियंगु और शंखपुष्पी ग्रहण कर श्रवण नक्षत्र में जल से भक्षण करें ॥ ७ ॥

महानीलीं च गोरण्टां कपिलां घृतकज्जलीम् ।
निशायामञ्जयेन्नेत्रे मोहयेदतिवेगतः ॥ ८ ॥

महानीली, गोरण्टा, कपिला और घृतकज्जली को रात्रि में नेत्र में अञ्जन करने से अतिशीघ्र लोगों को मोहित करता है ॥ ८ ॥

निर्यासश्च महानील्या निर्गुण्डीनीरमाश्रितः ।
भूतप्रेतपिशाचांश्च हन्ति सर्वान् न संशयः ॥ ९ ॥

महानीली का निर्यास ( गोद ) निर्गुण्डी के स्वरस के साथ सभी भूत, प्रेत और पिशाचों का नाश करता है, इसमें सन्देह नहीं है ॥ ९ ॥

एरण्डतैलसंमिश्रा वातशूलभयापहा ।
गुडेन शोफपाण्डुघ्ना धारोष्णेन तु कामलाम् ॥ १० ॥

एरण्ड ( रेड ) के तेल के साथ मिलाकर वातिक शूल के भय को नष्ट करती है, गुड के साथ सर्वाङ्ग शोफ और पाण्डु रोग को नष्ट करती है और धारोष्ण दुग्ध के अनुपान से कामला का नाश करती है ॥ १० ॥

गृहधूमेन संमर्द्या ह्येकाहविषमज्वरे ।
अन्येष्वपि च रोगेषु धारयेद्युक्तियोगतः ॥ ११ ॥

एक दिन के अन्तर से आने वाले विषम ज्वर में गृहधूम के साथ मर्दन करना चाहिए। इसी प्रकार युक्तिपूर्वक अन्य रोगों में भी धारण करना चाहिए ॥ ११ ॥

गुरूपदेशमार्गेण तैस्तैः सह रसायनम् ।
सेव्यमानमिदं कुर्याद् वलीपलितवर्जितम् ॥ १२ ॥
संवत्सरप्रयोगेण जीवत्यप्ययुतं समाः ।

गुरुपदिष्ट विधि से विभिन्न अनुपानों से इस रसायन के सेवन करने से वली और पलित का नाश होता है। वर्ष भर के प्रयोग से मनुष्य दस सहस्र वर्ष जीवित रहता है ॥ १२ ॥

पूर्वोक्तं नवनीताभ्रं दत्त्वा सारणसंपुटे ॥ १३ ॥
यथातैलं क्षणादत्र द्रावयेद् द्रवमुत्तमम् ।



रसेन द्रवतानेनागस्त्यपुष्पभवेन च ॥ १४ ॥
अम्लीकस्वरसैर्वापि पिष्ट्वा श्लक्ष्णं मुहुर्मुहुः ।
ताम्रपात्रे प्रकर्त्तव्यं प्रयोगैरेव मिश्रितम् ॥ १५ ॥
सेव्यमानमिदं कुर्याज्जरामरणवर्जितम् ।

पूर्वोक्त नवनीताभ्र को सारणसम्पुट में देकर तेल के समान क्षणमात्र में उत्तम द्रव का द्रावण करे।

द्रवमान इस रस से और अगस्तपुष्प से उत्पन्न रस से अथवा अम्लीक-स्वरस में पुनः-पुनः चिक्कण पीस करके ताम्र पात्र में प्रयोग से ही मिश्रित करे। सेवन किया जाता हुआ यह जरा ( वार्धक्य ) और मरण से विरहित मनुष्य को करता है ॥ १३-१५ ॥

पञ्चाङ्गचूर्णं नाकुल्या मिश्रं हेमरजोऽञ्चितम् ॥ १६ ॥
तच्च सेव्यमजीर्णेऽपि ग्रहण्यां भेषजोत्तमम् ।
तद्वद्रोगेष्वतीसारादिषु कौष्ठेषु शान्तये ॥ १७ ॥
मूसलीपत्रचूर्णेन रसस्यैतस्य सेवनम् ।

नाकुली के पञ्चाङ्ग-चूर्ण में स्वर्ण की धूलि ( सूक्ष्म कण अथवा भस्म ) मिला करके उस उत्तम औषध को अजीर्ण और ग्रहणी में सेवन करे। उसी प्रकार अतिसार आदि रोगों में तथा कोष्ठ के विभिन्न प्रकार के रोगों की शान्ति के लिए मुसली के पत्र के चूर्ण के साथ इस रस का सेवन करे ॥ १६-१७ ॥

क्षीरेण गुल्मशोफाग्निमान्द्यान् संनाशयेत् क्षणात् ॥ १८ ॥

क्षीर के साथ सेवन करने से गुल्म, शोफ और अग्निमांद्य क्षणमात्र में नाश कर देता है ॥ १८ ॥

भल्लातं वा गुडूचीं वा तिलेन पयसा सह ।
निषेवेत विनश्यन्ति कुष्ठं पामा विचर्चिका ॥ १९ ॥

भल्लातक ( भिलावा ) अथवा गुडूची को तिल और दुग्ध के साथ सेवन करने से कुष्ट, पामा और विचर्चिका नष्ट होती है ॥ १९ ॥

घृतेन क्षयरोगघ्नं कृच्छ्रं शर्करया युतम् ।
करे बद्धं महानीलीमूलं नित्यज्वरापहम् ॥ २० ॥

घृत से क्षय रोग का नाश करता है तथा शर्करा से कृच्छ्र ( मूत्र ) को नष्ट करता है। महानीलमूल को हाथ में बाँधने से नित्यज्वर नष्ट होता है ॥

स्वरसेन महानील्याः सलिलं सर्वदोषहृत्।
जपापल्लवपुष्पाणि महानीलीयुतानि च ॥ २१ ॥
तण्डुलाम्भसि पीतानि घ्नन्ति दुष्टं हि शोणितम्।
गोक्षुरेण महानीली पिष्टा तण्डुलवारिणा ॥ २२ ॥
मूत्रकृच्छ्ररुजं हन्ति महतीं च महौषधी।

महानीली के स्वरस से जल सभी दोषों को नष्ट करने वाला हो जाता है। जपा ( अँड़उल ) के पत्ते और फूल महानीली से युक्त चावल के धोवन के अनुपान से पीने से दुष्ट रक्त नष्ट करता है।

गोखरू के साथ उत्कृष्ट इस महौषधि महानीली को चावल के धोवन से पीसकर सेवन करने से मूत्रकृच्छ्र नामक रोग को नष्ट करती है ॥ २१-२२ ॥



## अथ शैलोदककल्पः

अतः परं प्रवक्ष्यामि शैलोदकविधिं प्रिये।
कर्दमायोमहीशैलैः शैलोदकचतुर्विधम् ॥ १ ॥

शिवजी कहते हैं कि हे प्रिये ! अब शैलोदक की विधि का वर्णन करूँगा। यह शैलोदक कर्दम, अयः, मही और शैल भेद से चार प्रकार का होता है ॥१॥

कानिचित् क्षणवेधीनि दिनवेधीनि कानिचित्।
पक्षमासादिषण्मासवेधकानि महीतले ॥ २ ॥

पृथ्वी तल में कुछ शैलोदक क्षणवेधी, कुछ दिनवेधी, पक्षवेधी, मासवेधी आदि तथा कुछ षड्मासवेधी होते हैं ॥ २ ॥

क्षिप्तं यदा भवेत् काष्ठं शैलीभूतं च दृश्यते।
बहिरन्तश्च तद्देव वेधकं तत् प्रकीर्तितम् ॥ ३ ॥

फेंकने पर क्षण मात्र में वह काष्ठ हो जाय परन्तु शैल के समान बाहर और भीतर से भी प्रतीत हो, हे देवि ! वही वेध कहा जाता है ॥ ३ ॥



हिङ्गुलं हरितालं च गन्धकश्च मनश्शिला।
रसकरसाभ्यां विमलविषाणाभ्यां च मर्दयेत् ॥ ४ ॥
अहोरात्रेण चैते हि कुर्वते वेधमुत्तमम्।

हिंगुल, हरताल, गन्धक और मनःशिला के रसक और रस से विमल और विषाण से मर्दन करे, दिन और रात में उत्तम वेधकर देते हैं ॥ ४ ॥

गन्धकं तालकं चैव तोयपूर्णे घटे क्षिपेत् ॥ ५ ॥
यदा ते च घनाकारे तदा शैलोदकं भवेत्।

गन्धक और ताल ( हरताल ) के जलपूर्ण घट में छोड़ दे और जब वह घनाकार ( Soba ) हो जाये तब शैलोदक होता है ॥ ५ ॥

अन्यथा चेष्टकं देवि तदा तत् स्यान्निरर्थकम्।
वासरे मानवर्ते तु क्षणवेधि च तत्र तु ॥ ६ ॥

हे देवि ! यदि अन्य प्रकार की चेष्टा हो तो वह निरर्थक हो जाता है। मानवर्त नामक [1]पर्वत पर क्षणवेधी होता है ॥ ६ ॥

श्रीशैले श्रीवनप्रान्ते पर्यङ्काख्ये शिलातले।
तत्रस्थं क्षणवेधि श्रीनद्यां भगवतीतटे ॥ ७ ॥
एकाहवेधकं तत्र गोकर्णे च दिनत्रयम्।
भद्रान्ते दिनवेधि स्याद्बिलान्ते च त्रिवासरे ॥ ८ ॥
तारेश्वरे मासकं स्यादूर्षादार्योदये तथा।
ब्रह्मेश्वरे मासकं स्यात् व्याघ्रपादेऽष्टवासरे ॥ ९ ॥
अघोराख्ये मासकं तु सिंहद्वीपे तथा पुनः।
दिनमेकं ब्रह्मगिरौ विन्ध्ये तु क्षणवेधकम् ॥ १० ॥

श्रीशैल पर श्रीवन के परिसरीय भाग में पर्यङ्क नामक शिलातल पर क्षणवेधी होता है, श्रीनदी के तट पर एक दिन में वेध करने वाला होता है। गोकर्ण में तीन दिन में वेध करता है, भद्रान्त में दिनवेधी, बिलान्त में तीन दिन में वेध, तारेश्वर में एक मास में वेध, आर्योदय में एक मास में वेध तथा ब्रह्मेश्वर में एक मास में, व्याघ्रपाद में आठ दिन में वेध, अघोर नामक

१. ( वासरस्तु पुमान्नगप्रभेददिनयोरपि ) अमर है।

स्थान में एक मास और फिर सिंहद्वीप में भी एक मास में वेध होता है। ब्रह्मगिरि पर एक दिन में तथा विन्ध्य में क्षणमात्र में वेध करने वाला होता है ॥ ७-१० ॥

वासरान्माल्यकर्णे तु क्षणवेधि तिलोदके।
किष्किन्धापर्वते रम्ये पंपातीरे क्षणाद्भवेत् ॥ ११ ॥

माल्यकर्ण में एक दिन में, तिलोदक में क्षणमात्र में, मनोहर किष्किन्धा पर्वत पर पम्पासर के तीर में क्षणमात्र में वेध करने वाला होता है ॥ ११ ॥

तस्य पश्चिमतो देवि योजनद्वितये पुनः।
भूशैले त्रिदिनैरेवं त्रिदिनैर्वेदपर्वते ॥ १२ ॥

हे देवि ! उसके पश्चिम दो योजन पर भूशैल पर तीन दिन में तथा वेद पर्वत पर भी तीन दिन में वेधक होता है ॥ १२ ॥

सिंहाचले पुरे देव्या दत्तात्रेयस्य सन्निधौ।
शैलोदकं कोटिवेधि दुर्गदेशेऽपि वासरात् ॥ १३ ॥

देवी के नगर सिंहाचल में दत्तात्रेय के समीप में शैलोदक कोटिवेधि होता है, दुर्गदेश में एक दिन में ही वेध करने वाला होता है ॥ १३ ॥

लक्षवेधि नृसिंहस्य नगरे च कलागिरौ।
कलिन्दनद्याः पूर्वे तु योजनद्वितये पुनः ॥ १४ ॥
तत्राङ्गिरसकुण्डे च क्षणवेधि शिलोदकम्।

नृसिंह के नगर कला पर्वत पर लक्षवेधी होता है, कलिन्द नदी (यमुना) के पूर्व दो योजन पर आङ्गिरस कुण्ड में क्षणवेधी शिलोदक होता है ॥ १४ ॥

वर्षाकाले भवेत्पीतं शीतकाले च लोहितम् ॥ १५ ॥

जो कि वर्षाकाल में पीला होता है और शीतकाल में रक्त वर्ण का होता है ॥ १५ ॥

उष्णकाले भवेत्कृष्णं त्रैविध्यं तस्य विद्यते।
अन्यत्र यत्र यत्रापि ब्रह्मविष्णुशिवोद्भवम् ॥ १६ ॥
अमृतं तत्र तत्रापि वज्रीकरणमुत्तमम्।

और उष्णकाल में कृष्णवर्ण का होता है—इस प्रकार वह तीन प्रकार का होता है। और भी जहाँ-जहाँ भी ब्रह्मा, विष्णु और शिव से जायमान होगा वहाँ सर्वत्र यह अमृत स्वरूप उत्तम वज्रीकरण रहेगा ॥ १६ ॥



तस्योत्पत्तिं प्रवक्ष्यामि यथा जानन्ति साधकाः ॥ १७ ॥

आगे उसकी उत्पत्ति कहता हूँ जैसा कि साधक जानते हैं ॥ १७ ॥

महीं समुद्धृतवतो वाराहस्य कलेवरात्।
यः स्वेदः पतितस्तस्माज्जातं शैलोदकं परम् ॥ १८ ॥

पृथ्वी का उद्धार करते समय भगवान् वाराह के शरीर से जो स्वेद गिरा उसी से यह शैलोदक हुआ है ॥ १८ ॥

तन्मुखोत्थः क्षणाद्वेधी वासारात्क्रोडदेशजः।
बाहुभ्यां क्षणवेधी स्यान्मासवेधी चतुष्पदे ॥ १९ ॥
षण्मासादपराङ्गे च सर्वं समफलं भवेत्।

उनके मुख से उत्पन्न क्षणमात्र में वेध करता है, क्रोड देश (कोख या हृदय देश) से उत्पन्न एक दिन में वेध करने वाला होता है। बाहुओं से क्षणवेधी और चतुष्पद से उत्पन्न हुआ मासवेधी होता है। ६ मास में अपराङ्ग से जायमान, इस प्रकार सभी का समान फल होता है। १९ ॥

अहोरात्रेण तत्क्षेत्ररक्षां कृत्वा दिशां बलिम् ॥ २० ॥
कृत्वा लक्षं जपित्वा तु गृह्णीयादमृतं परम्।
शरद्ग्रीष्मवसन्तेषु हेमन्ते वापि चर्चिता ॥ २१ ॥
आयसे ताम्रपात्रे च तत्तैलाम्बुमयेऽथवा।

दिन रात में उस क्षेत्र की रक्षा करके, दिशाओं की बलि करके और एक लक्ष जप करके उस उत्कृष्ट अमृत का ग्रहण करे। शरद, ग्रीष्म, वसन्त अथवा हेमन्त ऋतुओं में तथा लौह के या ताम्र के पात्र में अथवा उसी के तैल या जल से युक्त पात्र में पूजा करके ग्रहण करे ॥ २०-२१ ॥

शैलोदकपलान्यष्टौ पलं क्षीरं विनिक्षिपेत् ॥ २२ ॥
क्षीरावशेषं संक्वाथ्य त्रिःसप्ताहं पिबेन्नरः।
जीवेद्वर्षसहस्रं तु वलीपलितवर्जितः ॥ २३ ॥

शैलोदक ८ पल और एक पल दुग्ध मिलाकर क्षीरावशेष पर्यन्त क्वाथ करके तीन सप्ताह तक मनुष्य पान करे तो सहस्र वर्ष पर्यन्त वली और पलित से विरहित होकर जीवित रहे ॥ २२-२३ ॥

कुलत्थाष्टगुणं वारि पचेदष्टावशेषतः ।
चतुर्गुणेन तेनाथ पाचयेच्च पुनर्घृतम् ॥ २४ ॥
लिह्यात् समेन मधुना त्रिसप्ताहं तमन्वहम् ।
द्विरष्टवार्षिको बालः सहस्रायुर्भवेद् ध्रुवम् ॥ २५ ॥

कुलत्थ एक भाग और आठ भाग जल लेकर अष्टांशावशेष विधि से पाक करे और उसका चतुर्थांश घृत उससे सिद्ध करे, वह अवशिष्ट घृत समान मधु मिलाकर तीन सप्ताह पर्यन्त प्रति दिन सेवन करे—तो आठ का द्विगुण ( ८ × २ = १६ ) अर्थात् सोलह वर्ष का बालक सहस्र वर्ष पर्यन्त आयु वाला होता है, यह ध्रुव है ॥ २५ ॥

अवशिष्टं कुलत्थं तु संयोज्य मधुसर्पिषा ।
भक्षयेद्वर्षमेकं तु प्राप्नोत्ययुतजीवितम् ॥ २६ ॥

अवशिष्ट कुलत्थ को घृत और मधु मिलाकर एक वर्ष तक सेवन करने से दश सहस्र वर्ष पर्यन्त जीवन प्राप्त करता है ॥ २६ ॥

तत्सिद्धतैलेनाभ्यङ्गं भक्षणं चैव कारयेत् ।
पामां विचर्चिकां दद्रुं कुष्ठं च सहसा जयेत् ॥ २७ ॥
वलीपलितनिर्मुक्तः सहस्रायुर्भवेन्नरः ।

उससे सिद्ध तेल से अभ्यङ्ग तथा पाक करे तो पामा, विचर्चिका, दद्रु और कुष्ठ शीघ्र ही नष्ट हो जाते हैं और वली-पलित से रहित सहस्र वर्ष की आयु मनुष्य प्राप्त करता है ॥ २७ ॥

यः पिबेत् प्रातरुत्थाय शैलाम्बुचुलकत्रयम् ॥ २८ ॥
षण्मासेन सहस्रायुर्वलीपलितवर्जितः ।

जो प्रातःकाल उठकर तीन चुल्लू शैलोदक जल-पान करे वह छः मास में वली-पलित से रहित सहस्रायु होता है ॥ २८ ॥

अथवा सूतकं देवि वारिणा सह मर्दयेत् ॥ २९ ॥
मासेनैकेन देवेशि नष्टपिष्टं भविष्यति ।

अथवा हे देवि ! सूतक ( पारद ) को जल ( शैलोदक के स्वरस ) से मर्दन करे तो हे देवेशि ! एक मास में नष्टपिष्ट हो जाता है ॥ २९ ॥



मासमात्रं समश्नीयात् स भवेदजरामरः ॥ ३० ॥

और एक मास पर्यन्त उक्त रस का सेवन करने से वृद्धावस्था और मृत्यु के भय से मुक्त देवतुल्य हो जाता है ॥ ३० ॥

अथवा तं रसं हेम्ना पाचयेत् खदिराग्निना ।
गुटिका सुन्दरी नाम्ना सर्वामयनिवारणी ॥ ३१ ॥
कर्ता हर्ता स्वयं सिद्धो जीवेदाचन्द्रतारकम् ।

अथवा उस रस को स्वर्ण के साथ खदिर के अग्नि पर पकावे, तो वह सुन्दरी नामक गुटिका बनेगी जो कि सभी रोगों को नष्ट करती है । कर्ता, हर्ता और स्वयंसिद्ध होकर मनुष्य जब तक चन्द्रमा और तारागण वर्तमान हैं तब तक जीवित रहता है ॥ ३१ ॥

अथ तेनोदकेनैतत् क्षीरार्धं पायसं पचेत् ॥ ३२ ॥
मासमात्रप्रयोगेण वलीपलितवर्जितः ।

उसके जल से अर्धदुग्धावशेष परिमित पायस पकावे और उसके एक महीना के प्रयोग से मनुष्य वली-पलित से रहित होता है ॥ ३२ ॥

पक्त्वा तेनाम्भसा पथ्यां षष्टित्रिशतसङ्ख्यया ॥ ३३ ॥
मधुना भाण्डमापूर्य विधाय च विधानकम् ।
दिने दिने तथैकैकं प्रत्यहं भक्षयेन्नरः ॥ ३४ ॥

तीन सौ साठ संख्या में हरीतकी उसके जल से पकाकर पात्र को मधु से परिपूर्ण कर सभी आवश्यक विधानों को करके मनुष्य प्रतिदिन एक-एक करके भक्षण करे ॥ ३०-३४ ॥

वलीपलितनिर्मुक्तो जीवेद्वर्षसहस्रकम् ।

इस प्रयोग से मनुष्य वली-पलित से रहित होकर एक हजार वर्ष पर्यन्त जीवित रहता है ।

जले क्षिप्तैस्तु लोहैश्च शैलोद्भूतानि भक्षयेत् ॥ ३५ ॥

जल में क्षिप्त लौह से शैलोद्भूत उस वनस्पति का भक्षण करे ॥ ३५ ॥

क्षीराहारं च जीर्णान्ते वज्रकायो भवेन्नरः ।

और जीर्ण होने पर दुग्ध का सेवन करे तो मनुष्य वज्र के समान देहधारी होता है ।

तेनोदकेन संमर्द्य चाभ्रकं काथयेत् प्रिये ॥ ३६ ॥
कटुत्रययुतं खादेज्जीवेद्वर्षसहस्रकम् ।

हे प्रिये ! उसके जल से अभ्रक का मर्दन करके 'क्वथित करे और बाद में त्रिकटु ( सोंठ, मिर्च और पीपर ) के साथ भक्षण करे तो सहस्र वर्ष पर्यन्त जीवित रहे ॥ ३६ ॥

अथवा रसकर्षैकं तज्जलेन विमर्दयेत् ॥ ३७ ॥
इङ्गुदीफलमध्यस्थं तच्छैलोदकमध्यगम् ।
कालेन स्वगुणैर्वश्या कामिनी तस्य जायते ॥ ३८ ॥

अथवा एक कर्ष परिमित रस ( पारद ) का उसी के जल से मर्दन करे और इंगुदी के फल के बीच में शैलोदक के मध्य में रखे तो समय से उसके गुणों से उसके वश में कामिनी हो जाती है ॥ ३७–३८ ॥

षण्मासं तन्मुखे धार्य वज्रकायं करोति तम् ।
दशनागसमप्राणो देवैः सह स मोदते ॥ ३९ ॥

छः मास पर्यन्त उसे मुख में धारण करने से वज्र के समान शरीर वाला बना देती है और वह दस हाथी के समान बल से युक्त होकर देवताओं के साथ विहार करता है ॥ ३९ ॥

गृहीत्वा त्रिफलां तत्र शैलवारिणि निक्षिपेत् ।
यदा शिलेव तच्च स्याद् गृहीत्वा चूर्णयेत्ततः ॥ ४० ॥

त्रिफला को लेकर शैलोदक के जल में डाल दे और जब शिला के समान हो जाय तो निकाल कर चूर्ण करे ॥ ४० ॥

कान्तजीर्णं रसं तेन सार्धं रसघृतप्लुतम् ।
भक्षयेद्वर्षमेकं तु ततः क्षीराशनो भवेत् ॥ ४१ ॥
उदयादित्यसङ्काशो मेधावी प्रियदर्शनः ।

कान्तजीर्ण रस को उसके साथ रस और घृत के अनुपान से एक वर्ष पर्यन्त भक्षण करे और दुग्ध मात्र का आहार करे तो मनुष्य उदयकालीन सूर्य के समान मेधासम्पन्न हो प्रियदर्शन होता है ॥ ४१ ॥

नीलकुञ्चितकेशश्च जीवेदाचन्द्रतारकम् ॥ ४२ ॥



तथा काले और घुंघराले बालों से युक्त वह चन्द्रमा और तारागण की स्थिति पर्यन्त जीवित रहता है ॥ ४२ ॥

पारदं हरितालं च शिलां माक्षिकमेव च ।
गन्धकं च विषं चैव सर्वमेकत्र कारयेत् ॥ ४३ ॥

पारद, हरिताल, शिला ( मनःशिला ), माक्षिक ( स्वर्णमाक्षिक ), गन्धक और विष ( वत्सनाभ ) को एकत्र ग्रहण करके ॥ ४३ ॥

मर्दयेत् खल्वपाषाणे मातुलुङ्गरसेन तु ।
तेन प्रमर्दितं शुल्वं काञ्चनं भवति ध्रुवम् ॥ ४४ ॥

मातुलुङ्ग के रस से पत्थर के खरल में मर्दन करे और इससे मर्दन किया गया शुल्व ( ताम्र ) निश्चित ही स्वर्ण हो जाता है ॥ ४४ ॥

उपयुञ्जति मासैकं वलीपलितवर्जितः ।
सहस्रमायुषां जीवेन्महाबलपराक्रमः ॥ ४५ ॥

इसका एक मास पर्यन्त उपयोग करने से वलीपलित से रहित होकर बल और पराक्रम से युक्त मनुष्य एक सहस्र वर्ष पर्यन्त जीवित रहता है ॥ ४५ ॥

शैलोद्भूतां हरिद्रां च चूर्णयेत्तस्य योगतः ।
हेमत्वं लभते नागो बालार्कसदृशप्रभः ॥ ४६ ॥

शैलोद्भूता और हरिद्रा को उसके योग से चूर्ण करे तो नाग भी उदीयमान सूर्य की कान्ति वाला स्वर्ण हो जाता है ॥ ४६ ॥

शैलोदके विनिक्षिप्य भूशैलेयक्रमेऽपि वा ।
ज्ञात्वा कालप्रमाणेन वेधयेत्पारदं ततः ॥ ४७ ॥

शैलोदक में अथवा भूशैलोदक में छोड़कर, समय प्रमाण जानकर बाद में पारद का वेधन करता है ॥ ४७ ॥

रक्तक्षारयुतं ध्मातं सुवर्णेन च मारितम् ।
शतांशेन तु लोहानां सर्वेषां हेमकारकम् ॥ ४८ ॥

रक्त क्षार से युक्त उसे फूँक कर और सुवर्ण से मारित करे, बाद में शतांश से ही सभी धातुओं का स्वर्णकारक होता है ॥ ४८ ॥

द्वितीयसारणं प्राप्य सहस्रांशेन सिद्ध्यति ।
तं षोढा धारयेद्वक्त्रे दिव्यत्वं लभते ध्रुवम् ॥ ४९ ॥

उसके सहस्रांश से ही द्वितीय सारण प्राप्त करके सिद्ध होता है। उसका साधक छः प्रकार से मुख में रखने मात्र से ही दिव्यत्व को प्राप्त करता है ॥४९॥

निचुले वकुले चैव किंशुके मधुकेऽपि च।
इङ्गुदीफलमध्ये च रजनीद्वयमध्यके ॥ ५० ॥
अमृतास्वरसे वाथ मुस्ताकन्दौषधेषु च।
विधाय छोटकं तत्र क्षिप्त्वा तेन च मर्दयेत् ॥ ५१ ॥

निचुल, वकुल, किंशुक और मधुक या इंगुदी के फल के मध्य में, हरिद्रा के बीच में रख के अथवा गुरुच के स्वरस अथवा मुस्ता ( नागरमोथा ) के कन्द से छोटक ( गोला ) बनाकर, उसमें छोड़कर मर्दन करे ॥ ५०–५१ ॥

त्रिफलाव्योषकल्केन पेषयित्वा प्रयत्नतः।
पादेन कनकं दत्वा पारदं तत्र योजयेत् ॥ ५२ ॥
क्षिपेच्छैलाम्बुमध्यस्थं गुटिका वज्रवद्भवेत्।
पूर्ववत् सारणा कार्या पूर्ववत् सिद्धिदं भवेत् ॥ ५३ ॥

त्रिफला और व्योष ( शुण्ठी, पिप्पली और मरिच ) के कल्क से प्रयत्न पूर्वक पेषण करके एक पाद ( चतुर्थांश ) कनक ( धतूर ) देकर पारद मिलावे और इसे शैलोदक के मध्य में डाले, उससे गुटिका वज्र के समान होती है। पुनः पूर्ववत् सारणा करे और सिद्धि भी पूर्ववत् ही होती है ॥ ५२–५३ ॥

मुखे तां च विधृत्यात्र सहस्रायुर्भवेच्छिवे !।
द्वितीयसारणायोगाज्जायते लक्षवेधिकः ॥ ५४ ॥

हे शिवे ! उसको मुख में रखने से मनुष्य सहस्रायु होता है। द्वितीय सारणा के योग से लक्षवेधी होता है ॥ ५४ ॥

तं छोटं (गोलं) धारयेद्वक्त्रे लक्षायुर्जायते नरः।
चतुर्थसारणां प्राप्य कोटिवेधी भवेच्च यः ॥ ५५ ॥
कोट्यायुर्जायते तस्य खेचरत्वं च लभ्यते।
पञ्चमे दशकोटिश्च षष्ठे कोटिशतं भवेत् ॥ ५६ ॥

उस छोटक ( गोला ) को मुख में धारण करे तो लक्षवर्ष परिमित आयु वाला मनुष्य होता है। चतुर्थ सारणा के प्राप्त होने पर वह कोटिवेधी होता है, उससे कोटिवर्ष परिमित आयुःसंपन्न मनुष्य होता है अधिक क्या गगनचारी



देवत्व भी प्राप्त करता है। पंचम सारणा में दशकोटि और षष्ठ सारणा में शतकोटि वर्ष परिमित आयु होती है ॥ ५५–५६ ॥

यावच्चन्द्रार्कजीवित्वं लभते मनुजश्च सः।
ददाति सप्तमे वापि सारणा गुटिका परा ॥ ५७ ॥
खेचरी नाम विख्याता भैरवेण प्रयोजिता।
यः कोऽपि राजिकामात्रां मासमेकं तु भक्षयेत् ॥ ५८ ॥
वज्रदेहस्य सिद्धिः स्याद्दिव्यस्त्रीजनवल्लभः।
क्रियया चानया सर्वः स्वेच्छया शिवतां व्रजेत् ॥ ५९ ॥

और जबतक चन्द्रमा और सूर्य विद्यमान हैं तबतक मनुष्य जीवन प्राप्त करता है। सप्तम सारणा में यह गुटिका खेचरी नाम से विख्यात है, और भैरव से प्रयुक्त है। जो कोई भी एक राई परिमित एक मास पर्यन्त भक्षण करे तो वज्रदेह की सिद्धि होती है और मनुष्य दिव्य रमणियों का प्रिय होता है। इस क्रिया से मनुष्य स्वेच्छा से शिवत्व को प्राप्त होता है ॥ ५७–५९ ॥

नानाविधफलां चान्यां गुटिकां शृणु सुन्दरि !।
शुद्धं विधाय च रसं गन्धकं तत्र जारयेत् ॥ ६० ॥
त्रिगुणे गन्धके जीर्णे तेन हेम तु कारयेत्।
कारयेद्भस्म सूतं तु काञ्चनं तत्तु सूतकम् ॥ ६१ ॥

हे सुन्दरि ! अनेक प्रकार की फलों वाली अब गुटिका को श्रवण करो— इनको शुद्ध करके, उसमें गन्धक का जारण करे, त्रिगुण गन्धक के जीर्ण होने पर उसमें हेम ( स्वर्ण ) बनावे, पारद को भस्म बनावे और वह पारद स्वर्ण ही है ॥ ६०–६१ ॥

भस्मन्यत्र च सूतस्य शिलां साम्येन सङ्क्षिपेत्।
जीर्णेन तेन सूतेन वज्ररत्नं तु जारयेत् ॥ ६२ ॥

पारद के भस्म में समप्रमाण में शिला मिलावे, उस जीर्ण सूत से वज्ररत्न को जारित करे ॥ ६२ ॥

जारयेद्वज्रभस्मैतत् सिन्दूरारुणसन्निभम्।
तद्भस्म जीर्यते सूते त्रिगुणे तु सुरार्चिते ॥ ६३ ॥

इस वज्र भस्म को जारित करे वह सिन्दूर के समान रक्तवर्ण होता है। वह भस्म त्रिगुण, देवताओं से अर्चित पारद में जीर्ण होता है ॥ ६१ ॥

हाटके सा नयेत्सम्यग् गुटिकां तेन कारयेत्।
तथा लोहान् समावेष्ट्य कृत्वास्ये तां च साधकः ॥ ६४ ॥

उसे हाटक ( स्वर्ण ) में अच्छी प्रकार मिलावे और गुटिका बनावे तथा धातुओं से ढककर उसे साधक मुख में धारण करे ॥ ६४ ॥

नष्टक्षयो भवेत् सोऽपि चादृश्यो देवदानवैः।
लक्षवर्षसहस्राणि निर्बली बलवान् भवेत् ॥ ६५ ॥

इससे मनुष्य नष्टक्षय होता है तथा देवता और दानवों से अदृश्य होता है, लक्षसहस्र वर्ष पर्यन्त जीवित रहता है और निर्बल भी बलवान् होता है ॥६५॥

शूलिनीशक्तिसंयुक्ता रत्नैश्च गुणभूषणैः।
वक्त्रे करे च विधृता सर्वामयनिवारिणी ॥ ६६ ॥

शूलिनी शक्ति से युक्त गुणभूषण रत्नों से मुख और हाथ में धारण करने से सभी रोगों को नष्ट करता है ॥ ६६ ॥

गुटिका सा वरारोहे मधुरत्रितयान्विता।
वक्त्रस्था नाशयेत् साक्षात् पलितं वलितं तथा ॥ ६७ ॥

हे वरारोहे ! तीनों मधुर से युक्त वह गुटिका मुख में धारण करने से बली और पलित को नष्ट करती है ॥ ६७ ॥

शिवशक्तिश्च देवेशि ! रसाश्रिततयोच्यते।
हेम तारं तथा भानुः समभागाद्धि कारयेत् ॥ ६८ ॥
स्त्रीरजोऽन्तः स्थापयित्वा पद्मसूत्रेण वेष्टयेत्।
सिञ्चेच्छीतोदकेनैतद्यन्त्रस्थाने निधापयेत् ॥ ६९ ॥

हे देवेशि ! इसके आश्रित होने से शिवशक्ति कहलाती है, हेम, तार ( हरस्यवाचकस्तेन पारदो गृह्यते ) और भानु ( रविस्तत्पर्यायस्ताम्रो गृह्यते ) को-समभाग में लेकर स्त्री के रज के मध्य में रखकर कमलसूत्र से वेष्टित करे और शीतजल से इसे सिंचित करे और यन्त्रस्थान में स्थापित करे ॥६८–६८॥

रणे राजकुले दूते दिव्यकार्येषु योजयेत्।

संग्राम, राजदरबार, दूत और दिव्य कार्यों में प्रयोग में लावे।



वैक्रान्तमभ्रकं कान्तो रसकश्च तथायसम् ॥ ७० ॥
बिभीतकेन संयुक्तं माक्षिकं हेमतुल्यकम्।
समावर्त्य ततः सूतं योजयेत् पादयोगतः ॥ ७१ ॥

वैक्रान्त, अभ्रक, कान्त, रस, लौह और बिभीतक से युक्त माक्षिक और समप्रमाण में स्वर्ण आवर्तित करके बाद में चतुर्थांश पारद मिलावे ॥७०–७१॥

कुमारीरससंयुक्ता कृता हि गुटिका शुभा।
रोगान्मृत्युं जरां हन्ति वक्त्रस्था नात्र संशयः ॥ ७२ ॥

फिर घृतकुमारी के रस से मिलाकर शुभकारी गुटिका बनावे, इसे मुख में धारण करने से रोग, मृत्यु, जरा को नष्ट करती है। इसमें संदेह नहीं है ॥७२॥

पञ्चताराद्वरारोहे ! सूतकद्वयमेव च।
त्रयो गगनभागाः स्युरेकैकं हेमकान्तयोः ॥ ७३ ॥
अर्धं शुल्बाद्विधायैतैर्गुटिकां कामसुन्दरीम्।
भक्षयेदजरश्चैव भवेत्तेन महाबलः ॥ ७४ ॥

हे वरारोहे ! पाँच भाग रजत का ( अमरकोश ४२६–१६६ ) दो भाग पारद का, तीन भाग अभ्रक का एक-एक भाग स्वर्ण और कान्त (लौह विशेष) का ( इन सब को सम्मिश्रित प्रमाण ताम्र का आधा होना चाहिए, अर्थात् इनसे द्विगुणित ताम्र लेकर ) अथवा आधा भाग ताम्र का लेकर कामसुन्दरी नामक गुटिका बनाकर भक्षण करे तो उसके सेवन से अजर ( वार्धक्यरहित ) और अति बल-सम्पन्न मनुष्य हो जाता है ॥ ७३–७४ ॥

सूतभस्म पलैकं च मृतकान्तः पलोन्मितः।
एकीकृत्य च तत्सर्वं मध्वाज्याभ्यां तु पेषयेत् ॥ ७५ ॥
गुटिकां कारयेद् देवि ! त्रिवारं तदनन्तरम्।
एकैकं भक्षयेन्नित्यं वर्षमेकं निरन्तरम् ॥ ७६ ॥
जीवेद्वर्षसहस्राणि रुद्रतुल्यो महाबलः।

एक पल पारद भस्म और एक पल ही कान्त भस्म ( मृतकान्त ) को एकत्रित करके मधु और घृत से पेषण करके गुटिका बना ले, उसके बाद १ वर्ष पर्यन्त, दिन में तीन बार एक-एक गुटिका निरन्तर एक वर्ष तक सेवन करे तो सहस्रों वर्ष पर्यन्त शिव के सदृश महाबलसम्पन्न जीवित रहे ॥ ७५–७६॥

## अथ श्वेतपुनर्नवाकल्पः

पुनर्नवाया मूलं तु शुभ्रं गोघृतमिश्रितम्।
अञ्जितं हरति क्षिप्रं नेत्रान्तरगता रुजः॥ १॥

श्वेत पुनर्नवामूल, गो के घृत के साथ मिश्रित कर अञ्जन करने से नेत्रगत व्याधियों को शीघ्र नष्ट करता है॥ १॥

क्षीरेण पुष्पं मधुनाश्रुवाहं भ्रुवोश्च कण्डूं पटलं च नील्या।
नेत्रान्धतां काञ्जिकया निहन्ति पुनर्नवा नेत्रनवं करोति॥ २॥

दुग्ध से पुष्प, शहद से अश्रुवाह, नीली से भौहों की कण्डू और पटल तथा काँजी से नेत्रान्धता नष्ट होती है, अधिक क्या यह पुनर्नवा नेत्र को नवीन बना देती है॥ २॥

नक्तान्ध्ये च दिवान्ध्ये च क्षीरं युञ्जीत पूर्ववत्।
छायाशुष्कं तु तच्चूर्णं समूलफलपल्लवम्॥ ३॥
सिन्धूत्थं गोघृतेनाक्तं गुल्मप्लीहविनाशनम्।
तच्चूर्णं सितया साकं यद्वा क्षीरेण यः पिबेत्॥ ४॥
प्रभातकाले सततं स जीवेच्छरदां शतम्।
चूर्णं ज्योतिष्मतीयुक्तं कामानलविवर्धनम्॥ ५॥

नक्तान्ध्य और दिवान्ध्य में पूर्ववत् उसका दुग्ध उपयोग में लावे। सिन्धु देश में उद्भूत मूल, फल और पल्लव के साथ छाया में सुखाया हुआ उसका चूर्ण गोघृत के साथ गुल्म और प्लीहा को नष्ट करता है। सिता (मिश्री) के साथ उसका चूर्ण अथवा दूध से निरन्तर प्रातःकाल जो पीता है वह सैकड़ों वर्ष तक जीवित रहता है। ज्योतिष्मती से युक्त उसका चूर्ण कामाग्नि को बढ़ाने वाला होता है॥ ३-५॥

तज्जटां वारिणा पिष्ट्वा नेत्ररोगेषु योजयेत्।
शिखामधुसमायुक्तं सेवितं च जरां जयेत्॥ ६॥

उसकी जटा को जल से पीस कर नेत्र रोगों में व्यवहृत करे, उसकी जड़ और मधु एक साथ सेवन करने से वार्धक्य दूर होता है॥ ६॥

पुनर्नवाशिखाचूर्णं पलार्धं पयसा सह।
मासैकं मासयुग्मं वा जीर्णं पीतं विनाशयेत्॥ ७॥



आधा पल परिमित पुनर्नवा के शिखा का चूर्ण दुग्ध के साथ एक मास अथवा दो मास तक सेवन करने से जीर्ण पीत रोग ( Chronic joundice ) को नष्ट करता है॥ ७॥

क्षीरान्नेन विनश्यन्ति शिरोरोगज्वरादयः।
पुष्यार्केण च सङ्गृह्य प्रातः श्वेतपुनर्नवा॥ ८।
समूलपर्णां सङ्गृह्य सूक्ष्मचूर्णं तु कारयेत्।
घृतेन मधुनालोड्य मासमात्रं निधापयेत्॥ ९॥
वसन्तसमये चैव शुचिर्भूत्वा समाहितः।
अहन्यहनि भोक्तव्यं विडालपदमात्रकम्॥ १०॥

( इसका सेवन करते हुए ) क्षीर पक्व अन्न का का सेवन करने से शिरोरोग और ज्वरादि नष्ट होते हैं। रविवार को पुष्य नक्षत्र में प्रातः श्वेत पुनर्नवा को मूल और पत्र सहित ग्रहण कर के सूक्ष्म चूर्ण कर लेवें और उसे घृत और मधु से आलोडित कर एकमास पर्यन्त रख देवे। वसन्त ऋतु में पवित्र होकर प्रतिदिन १ कर्ष प्रमाण में सेवन करना चाहिए॥ ८-१०॥

ततो मासान्तरे देवि चाम्पेयकुसुमप्रभः।
अल्या समानः केशः स्याद् गौडदेशस्त्रियामिव॥ ११॥
बृहस्पतिसमो विद्वाञ्जीवेत्पञ्चशताब्दकम्।

हे देवि! एक मास के बाद चम्पा के पुष्प के समान, भ्रमर पंक्ति के समान, गौडदेश की स्त्रियों के समान केश हो जाता है। बृहस्पति के समान विद्वान् होकर पांच सौ वर्ष तक जीवित रहता है॥ ११॥

तन्मूलेन प्रशान्तोष्मा ताम्रः स्वर्णत्वमाप्नुयात्॥ १२॥

उसके मूल से ताम्र, उष्ण, शान्त होकर स्वर्ण हो जाता है॥ १२॥

तच्च योगेषु कनकं संयोज्य यदि भुज्यते।
अनेककालजीवी स्यात् कन्दर्प इव मूर्तिमान्॥ १३॥

उसे योग में स्वर्ण से युक्त कर यदि भक्षण करे तो कामदेव के समान सुन्दर अनेक काल तक जीवित रहे॥ १३॥

---

## अथ रक्तपलाशकल्पः

पातालपत्रमादाय पलाशतरुबीजकम् ।
निष्कद्वयमितं तैलं मध्वाज्येन समं पिबेत् ॥ १ ॥

पाताल-पत्र लेकर पलाश वृक्ष का बीज और दो निष्क ( कर्ष ) परिमित तैल, उसी समान घृत और मधु मिलाकर पान करे ॥ १ ॥

मासमात्रेण योगीन्द्रो नक्षत्राण्यपि पश्यति ।
अनेककालजीवी स्यात् स्तूयमानः सुरासुरैः ॥ २ ॥

इसके एक मास प्रयोग से (मनुष्य) योगिराज, नक्षत्रों को भी देखता है, तथा देवताओं में वन्दनीय वह अनेक वर्षों तक जीवित रहता है ॥ २ ॥

धात्रीरसेन तद्बीजचूर्णं सम्यग्विभावितम् ।
सप्ताहं पयसा तद्वच्छोषयित्वा पुनः पुनः ॥ ३ ॥
सप्ताहसेवनात्तस्य दूरदृष्टिर्भवेन्नरः ।
सूर्यः प्रकाशे वेगे तु वायुर्बुद्धौ बृहस्पतिः ॥ ४ ॥
वाचा सरस्वतीं जित्वा जीवेदाचन्द्रतारकम् ।

धात्री के (आमला) रस से उसका चूर्ण अच्छी प्रकार एक सप्ताह भावित कर, बाद में उसी प्रकार दूध से भावित कर पुनः पुनः सुखाकर रक्खे, इसके एक सप्ताह सेवन करने से मनुष्य की दूरदृष्टि होती है और प्रकाश में सूर्य, वेग में वायु, बुद्धि में बृहस्पति तथा वाणी में सरस्वती को जीतकर जबतक चन्द्रमा और तारागण विद्यमान रहें तब तक जीवित रहे ॥ ३-४½ ॥

आतपे शोषितं तस्य प्रसूनजनितं रजः ॥ ५ ॥
क्षीरेणाद्रीकृतस्निग्धभाण्डे विन्यस्य संस्थितम् ।
एकविंशदिनोर्ध्वं तु सुमुहूर्ते शिवान्तिके ॥ ६ ॥
तद्भजेत् पयसाहारं काञ्जिकाम्लादिवर्जितम् ।
एकविंशदिनैस्तस्य कल्केन खचरो भवेत् ॥ ७ ॥

धूप में सुखाया हुआ उसके पुष्प का सूक्ष्म चूर्ण दुग्ध से सिंचित पात्र में इक्कीस दिन रखकर बाद में अच्छे मुहूर्त में शिव के समीप दूध मात्र भक्षण करते हुए सेवन करे तथा काञ्जी और अम्ल आदि का परहेज करे । इक्कीस दिन में उसके कल्क से मनुष्य गगनचर ( देवता ) हो जाता है ॥ ७ ॥



वज्रेण तुल्यो गजवद्भीमसेनपराक्रमः ।
जरामरणनिर्मुक्तो कदाचित् क्षयं व्रजेत् ॥ ८ ॥

वज्र के सदृश, हाथी के समान तथा भीमसेन के समान पराक्रम-संपन्न वार्धक्य और मृत्यु से रहित कभी भी क्षय नहीं प्राप्त करता है ॥ ८ ॥

तच्च चूर्णं समादाय पलपात्रं पिबेद्यदि ।
चतुष्पलेन दुग्धेन मासमात्रं जितेन्द्रियः ॥ ९ ॥

एक पल परिमित उसका चूर्ण चार पल दूध से जितेन्द्रिय होकर एक मास तक यदि सेवन करे ॥ ९ ॥

तन्मूलेन प्रशान्तोष्मा ताम्रः स्वर्णं प्रजायते ।

उसके मूल से ताम्र उष्मा शान्त होकर स्वर्ण हो जाता है ।

अनेककालजीवी स्यात् कन्दर्प इव दीप्तिमान् । १० ॥

उसके सेवन करने से मनुष्य अधिक समय तक जीवित रहता है तथा कामदेव के समान कान्ति-सम्पन्न होता है ॥ १० ॥

## अथ ब्रह्मकल्पः

ब्रह्मवृक्षस्य पञ्चाङ्गं छायाशुष्कं सुचूर्णितम् ।
मध्वाज्याभ्यां लिहेत्कर्षं वर्धयेत् स जरां जयेत् ॥ १ ॥

ब्रह्मवृक्ष के पंचाग को छाया में सुखाकर महीन चूर्ण बनावे और एक कर्ष परिमित घृत और मधु से चाटे, तो वृद्धि होती है और वृद्धावस्था को जीत लेता है ॥ १ ॥

जीवेद्वर्षसहस्रैकं दिव्यकायो भवेन्नरः ।

सहस्र वर्ष तक जीवित रहता है, तथा मनुष्य दैवी शरीर वाला हो जाता है ।

ब्रह्मवृक्षमतिस्थूलं छेदयेदर्धभागतः ॥ २ ॥
मध्ये चार्धात् त्रिहस्तं स्यात्तस्य मूर्ध्नि जलं कृतम् ।
पञ्चजातीफलैः पूरयित्वा तार्क्ष्यें निरुध्य च ॥ ३ ॥
कुशैस्तु वेष्टयेत् सर्वं मृदालेप्य च गोमयैः ।
आवेष्ट्य वस्त्रखण्डेन लिम्पेन्मृद्गोमयैस्ततः ॥ ४ ॥

अति स्थूल ब्रह्मवृक्ष को अर्धभाग में ही काटे, अर्ध से बीच में तीन हाथ का होवे उसके ऊपरी भाग पर जल रक्खे और ५ जातीफल से उसे पूर्ण कर और तार्क्ष्य ( रसांजन ) पर रोककर सभी को कुश से वेष्टित कर मिट्टी और गोबर से लेप कर, पुनः वस्त्र से आवेष्टित कर मिट्टी और गोबर से लेप करे ॥ २-४ ॥

शुको गजपुटे देयः सम्यगारण्यकोद्भवः ।
स्वाङ्गशीतलमुद्धृत्य सद्रवाणि फलानि च ॥ ५ ॥
क्षिपेन्मध्वाज्यसंयुक्ते भाण्डे तान्येव भक्षयेत् ।

फिर आरण्य ( बन ) में उत्पन्न शुक[1] को गजपुट में फूंक देवे स्वांगशीतल होने पर द्रवसहित फल को लेकर मधु और घृत से युक्त पात्र में रख देवे और उसी का भक्षण करे ॥ ५ ॥

यथेष्टं भूगृहान्तस्थः क्षीराहारी जरां जयेत् ॥ ६ ॥

इच्छानुसार पृथ्वी के भीतर के घर में स्थित होकर दुग्ध मात्रा का आहार करते हुए ( भक्षण करे ) तो वृद्धावस्था जीत लेवे ॥ ६ ॥

छिद्रं पश्यति मासाभ्यां निधानानि च भूतले ।
जीवेद् ब्रह्मदिनं यावत् सर्वरोगविवर्जितः ॥ ७ ॥

दो मास सेवन करने से पृथ्वी के छिद्र और खजाने देख सकता है और सभी रोग से रहित होकर ब्रह्मा के दिन पर्यन्त जीवित रहता है ।

ॐ नमो वासुदेवाय श्रीकेशवाय श्रीनृसिंहाय तेजसे कुरु कुरु स्वाहा ।

१. शुक शब्द पुल्लिंग—शिरीष वृक्ष का वाचक है अतः ब्रह्मवृक्ष का पर्याय भी शिरीष संभावित है ।



अनेन मन्त्रेण सप्तवारमभिमन्त्र्यौषधं भक्षयेत् ॥

ओं नमो वासुदेवाय श्री केशवाय श्रीनृसिंहाय तेजसे, कुरु कुरु स्वाहा ।

इस मन्त्र से ७ बार अभिमंत्रित करके औषध का भक्षण करे ।

## अथ श्वेतपलाशकल्पः

पत्रं पुष्पं फलं ग्राह्यं सूक्ष्मचूर्णं च कारयेत् ।
कृत्वा गोक्षीरसंयुक्तं भक्षयेद्वा समाहितः ॥ १ ॥

पत्र, पुष्प और फल का ग्रहण करके सूक्ष्म चूर्ण करे, गाय के दूध के साथ एकाग्र होकर भक्षण करे ॥ १ ॥

क्षीराहारी भवेन्नित्यं वलीपलितवर्जितः ।
द्विरष्टवर्षकायोऽसौ जीवेद्वर्षशतत्रयम् ॥ २ ॥

नित्य दूध मात्र का आहार करते हुए मनुष्य वली और पलित से रहित १६ वर्ष का शरीर धारण करते हुए तीन सौ वर्ष तक जीवित रहता है ॥ २ ॥

तस्य पुष्पस्य निर्यासं तालकेन सुभावितम् ।
तेन पातालकल्केन द्वाविंशांशेन विन्दति ॥ ३ ॥
वङ्गो भवति तत्तारं कुन्दपुष्पस्य सन्निभम् ।

उसके पुष्प के निर्यास को तालक से सुभावित कर बाइसवाँ भाग पाताल कल्क से युक्त करे इससे बंग कुन्द के समान तार ( चांदी ) होता है ॥ ३ ॥

तस्य पुष्परसं चैव गन्धकं चैव भावयेत् ॥ ४ ॥
लितानि सूक्ष्मपत्राणि पुटपाचेन काञ्चनम् ।

उसका पुष्परस और गन्धक भावित करे उससे लिप्त सूक्ष्म पत्रों का पुट पाक करने से स्वर्ण हो जाता है ॥ ४ ॥

तस्य बीजस्य तैलेन गन्धकेन सुमर्दितम् ॥ ५ ॥
द्वात्रिंशदंशैस्तत्कल्कैः पारदः काञ्चनं भवेत् ।

उसके बीज के तैल और गन्धक से अच्छी प्रकार मर्दित कर उसके बत्तीसवें अंश कल्क से पारद स्वर्ण होता है ॥ ५ ॥

श्वेतपालाशपञ्चाङ्गं चूर्णितं मधुना सह ॥ ६ ॥
कर्षैकं भक्षयेन्नित्यं व्याधिमृत्युजरापहम् ।

श्वेत पलाश के पंचाग को चूर्ण करके मधु के साथ एक कर्ष प्रमाण में नित्य भक्षण करने से व्याधि, मृत्यु और वार्धक्य दूर करता है ।

ब्रह्मायुर्जीवितं सिध्येत् स्पर्शमात्रान्न संशयः ॥ ७ ॥

स्पर्श मात्र से ब्रह्मा के आयु पर्यन्त सिद्ध होता है इसमें सन्देह नहीं ॥ ७ ॥

अमृतं कुरु, अमृतमालिन्यै नमः ।
अनेन सर्वे सिध्यन्ति योगाः सप्ताभिमन्त्रिताः ॥ ८ ॥

अमृतं कुरु, अमृतमालिन्यै नमः । इस मंत्र से सात बार अभिमंत्रित कर प्रयोग करने से सभी योग सिद्ध होते हैं ॥ ८ ॥

## अथ कृष्णहरिद्राकल्पः

आर्द्राशुष्कं निशाचूर्णं शुष्कभाण्डोदरस्थितम् ।
तन्निष्कपात्रं मूत्रेण गव्येनापीय शोधयेत् ॥ १ ॥

आर्द्रा नक्षत्र में छाया में सुखाया हुआ हरिद्रा का चूर्ण, सूखे पात्र के मध्य में रखा हुआ, एक निष्क ( कर्ष ) परिमाण में गौ के मूत्र से पान कर शोधन करे ॥ १ ॥

सप्ताहं सेव्यमानं तु हन्यात् कुक्षिगतात् गदान् ।
उष्णोदकेन तत्पानात् सप्ताहाद्वीर्यवान् भवेत् ॥ २ ॥

एक सप्ताह सेवन करने से उदरगत रोगों को नष्ट करता है । गरम जल से उसका पान करने से एक सप्ताह में वीर्यवान हो जाता है ॥ २ ॥

शाल्यन्नं पयसाश्नीयाद् गवामाज्येन नित्यशः ।
निष्कमात्रं निशाचूर्णं मधुना सह मेलनात् ॥ ३ ॥

शालि ( साठी ) का चावल दूध से भक्षण करते हुए निष्क ( कर्ष ) परिमित निशाचूर्ण गोघृत और मधु से मिलाकर नित्य भक्षण करें ॥ ३ ॥



मासाच्च शिवकान्तिः स्याद् द्विमासात् कमलप्रभः ।
त्रिमासात् पीतकाकारश्चतुर्मासाज्ज्वरादिभिः ॥ ४ ॥
विमुक्तः पञ्चमासाच्च स्थिरयौवनगर्वितः ।

एक मास सेवन करने से शिव के समान कान्ति वाला होता है, दो मास सेवन करने से कमल के समान कान्ति-सम्पन्न होता है । तीन मास से पीतकाकार, चार मास सेवन करने से ज्वरादि से विमुक्त करता है, पांच मास सेवन करने से स्थिर युवावस्था से गर्वित होता है ॥ ४ ॥

षण्मासात् सूर्यसङ्काशः सप्तमासान्मनोजवी ॥ ५ ॥

छ मास में सूर्य के सदृश, सात मास से मन के सदृश वेग वाला होता है ॥ ५ ॥

अष्टमासात् प्रसन्नात्मा दूरश्रवणवान्नरः ।
नवमासादनायासात् स्त्रीशतं चाभिसेवते ॥ ६ ॥

आठ मास सेवन करने से प्रसन्नात्मा तथा दूर तक श्रवण करने वाला होता है । नवमास सेवन करने से अनायास ही सौ स्त्रियों के साथ रमण करता है ॥

अनेकशास्त्रवेदी स्याद् दशमासनिषेवणात् ।
मासादेकादशान्मर्त्यः सर्वज्ञत्वमवाप्नुयात् ॥ ७ ॥

दस मास से अनेक शास्त्रों का ज्ञाता होता है, एकादश मास से मनुष्य सर्वज्ञत्व प्राप्त करता है ॥ ७ ॥

इदं संवत्सरं यस्तु सेवते क्षीरपोऽन्वहम् ।
जरामरणनिर्मुक्तो हरिद्राचूर्णलोलुपः ॥ ८ ॥

एक वर्ष पर्यन्त दुग्ध मात्र का आहार करते हुए जो सेवन करता है, वह हरिद्रा चूर्ण का लोलुप जरा और मरण से मुक्त होता है ॥ ८ ॥

## अथ कटुरोहिणीकल्पः

पुष्यार्के रोहिणीचूर्णं वारिणा सह सेवितम् ।
ज्वरं हरन्ति दुर्वारं भ्रमसम्भ्रमकारकम् ॥ १ ॥

पुष्यार्क ( रविवार के दिन पुष्य नक्षत्र ) में रोहिणी चूर्ण को जल के साथ सेवन करने से दुर्निवार ज्वर, जिसमें भ्रम तथा संभ्रम आदि उपद्रव हों, शान्त होता है ॥ १ ॥

पयसा चान्विता सम्यक् पलार्धेन विपाचिता ।
अष्टावशेषं तत्क्षीरं रात्रौ सर्वज्वरापहम् ॥ २ ॥

आधा पल परिमित रोहिणी अष्टावशेष विधि से पकाकर रात्रि में पीने से सभी प्रकार के ज्वरों को नष्ट करती है ॥ २ ॥

प्रभातकाले संपीता विरेचनकरी स्मृता ।
पिष्ट्वाश्वत्थत्वचा कट्यां लेपाद्दाहज्वरापहा ॥ ३ ॥

प्रातः काल पीने से विरेचन करती है । अश्वत्थ ( पीपल ) की छाल के साथ पीस कर कमर में लेप करने से दाह और ज्वर नष्ट करती है ॥ ३ ॥

तन्मूलं मधुना पीतं सर्वज्वरहरं नृणाम् ।
तच्चूर्णमर्कदुग्धेन भावितं सेवितं यदि ॥ ४ ॥
ताम्बूलसहितं चैव कृत्वा तद्गुटिकात्मना ।
तृतीयकं ज्वरं हन्याचातुर्थिकमथापि वा ॥ ५ ॥

मधु के साथ उसका मूल पान करने से मनुष्यों के सभी प्रकार के ज्वर को नष्ट करती है। उसका चूर्ण अर्क दुग्ध से भावित कर पान के साथ गुटिका बनाकर यदि सेवन किया जाय तो तृतीयक और चातुर्थिक ज्वर को नष्ट करता है ॥ ४–५ ॥

काञ्जिकेन समायुक्तं समस्तविषनाशकम् ।

कांजी के साथ पान करने से समस्त विष का नाश करती है ।

वीरवृक्षस्य तन्मूलं कण्ठस्थं ज्वरनाशकृत् ॥ ६ ॥

वीरवृक्ष[1] का और उसका मूल कण्ठ में धारण करने से ज्वर का नाश करता है ॥ ६ ॥

१. वीर पद से 'वीरं शृङ्ग्यां नतेऽपि च' इस हेमचन्द्र के प्रामाण्य से शृङ्गी विष का ग्रहण अभिप्रेत है ।



शिवावीरजटामूलं कट्यां संवेष्ट्य तन्तुना ।
सरागेण गले बध्वा सर्वरोगनिवारणम् ॥ ७ ॥

शिवा ( हरीतकी ), वीर ( शृङ्गी ), जटा (जटामांसी) का मूल कमर में राग युक्त सूत से गले में बांध कर सभी रोगों का निवारण करती है ॥ ७ ॥

## अथाश्वगन्धाकल्पः

अश्वगन्धारजः श्लक्ष्णं पारदैः सह सेवितम् ।
अन्वहं कर्षमात्रेण सर्वामयविनाशनम् ॥ १ ॥

अश्वगंधा का सूक्ष्म चूर्ण पारद के साथ प्रतिदिन एक कर्ष परिमाण में सेवन करने से सभी रोगों का नाश करता है ॥ १ ॥

धात्रीरसेन तच्चूर्णं कर्षं यष्ट्यापि सेवितम् ।
दिव्यदृष्टिर्भवेज्जन्तुर्जरामरणवर्जितः ॥ २ ॥

एक कर्ष परिमित उसका चूर्ण धात्री के रस और मधुयष्टि से सेवन करने से मनुष्य की दिव्यदृष्टि होती है और वह जरा-मरण से वर्जित होता है ॥२॥

निष्कमात्रं हि तद्बीजं गुडूच्यास्त्वग्भवं रजः ।
संयोज्य निष्कद्वयतः सेवयेदुष्णवारिणा ॥ ३ ॥

निष्क ( कर्ष ) परिमित उसका बीज और गुरुच के छाल का चूर्ण, दो निष्क प्रमाण मिला करके गरम जल से सेवन करे ॥ ३ ॥

पीतं जयति दुर्वारं नानाविधगदानपि ।
तच्चूर्णं नवनीतेन सेवितं सामजालहृत् ॥ ४ ॥

इसका पान करने से दुर्वार अनेक प्रकार के रोगों को जीतता है । उसका चूर्ण मक्खन के साथ सेवन करने से सामदोष-समूह का नाश करता है ॥४॥

तच्चूर्णं तैललेपेन प्रणश्यन्ति त्वगामयाः ।

आधा पल परिमित इसका चूर्ण द्विगुण तैल में मिलाकर लेप करने से चर्मरोग नष्ट होते हैं ।

पलार्धमस्य चूर्णस्य तिलं तद्द्विगुणं ततः ॥ ५ ॥
कुसुम्भमाषजं चूर्णमेतदाज्येन पाचितम् ।
अपूपं भक्षयेन्मासं वत्सरं वा जरां जयेत् ॥ ६ ॥

इस चूर्ण का आधा पल और उससे दूना तिल तथा कुसुम्भ ( बरैं ) और माष ( उर्द ) का चूर्ण घृत में पकाकर मालपूआ बनाकर एक मास अथवा वर्ष पर्यन्त सेवन करने से वृद्धावस्था का जय करता है ॥ ५-६ ॥

श्वेताश्वगन्धमूलेन रक्षाबन्धे कृते सति ।
दुर्बलोऽपि महाभारं वहेदक्लिष्टवेदनः ॥ ७ ॥

श्वेत अश्वगंध के मूल से रक्षाबन्धन करने पर दुर्बल भी बिना किसी वेदना के अधिक भार को ढोने में समर्थ होता है ॥ ७ ॥

उपोष्य त्रिदिनं माघत्रयोदश्यां जपेद्धरेः ।
मन्त्रं भजेदश्वगन्धाचूर्णं शस्त्राभिघातहन् ॥ ८ ॥

तीन दिन तक उपवास करके माघ मास की त्रयोदशी के दिन हरि का भजन करते हुए अश्वगंधा चूर्ण का सेवन करने से शस्त्र के अभिघातजन्य कष्ट का विनाश करता है ॥ ८ ॥



## अथाङ्कोलकल्पः

सितारुणहरित्कृष्णवर्णैश्चैव चतुर्विधः ।
अङ्कोलं गुरुहस्तस्य मूलं पूर्वदिगाश्रितम् ॥ १ ॥
कर्पूरमधुसंयुतं नेत्रयोरञ्जनं यदि ।
दिनावसाने क्रियते नष्टदृष्ट्यवलोकनम् ॥ २ ॥

अंकोल सफेद, अरुण, हरित और कृष्ण वर्ण से चार प्रकार का होता है। गुरुवार को हस्त नक्षत्र में पूर्व दिशा में से अंकोल का मूल ग्रहण करके कर्पूर और मधु से युक्त करके सायंकाल नेत्रों में अंजन करने से नष्टदृष्टि वालों को भी दीखने लगता है ॥ १-२ ॥



एकविंशदिनैस्तस्य बीजं क्षौद्रसमन्वितम् ।
भजन्तं मानवं दृष्ट्वा सद्यस्सर्पो मृतिं नयेत् ॥ ३ ॥

इक्कीस दिन तक मधु से युक्त उसका बीज सेवन करने वाले मनुष्य को देखकर तुरन्त सर्प मृत्यु को प्राप्त होता है ॥ ३ ॥

तद्बीजचूर्णं मधुना पक्षे चान्द्रदिनान्तरे ।
एकोऽपि सेवते मर्त्यो जरामुक्तो युवा भवेत् ॥ ४ ॥

उसके बीज का चूर्ण मधु से एक पक्ष में चान्द्र दिन के अन्तर से एक भी मनुष्य सेवन करने से वृद्धावस्था से मुक्त होकर युवा होता है ॥ ४ ॥

तत्तैलमर्दितः सूतः पुटे बन्धत्वमाप्नुयात् ।
तन्निष्कमात्रं विन्यस्तस्ताम्रः स्वर्णत्वमाप्नुयात् ॥ ५ ॥

उसके तैल से मर्दन किया हुआ पारद पुट में बन्धता को प्राप्त होता है उसे निष्क ( कर्ष ) प्रमाण में डालने से ताम्र स्वर्ण होता है ॥ ५ ॥

कृष्णाङ्कोलोत्थबीजानि चूर्णीकृत्य हि तेन च ।
श्लक्ष्णेन सम्यक् ताम्रस्य भाजनान्तं प्रलेपयेत् ॥ ६ ॥

कृष्णांकोल के सूक्ष्म चूर्ण से अच्छी प्रकार से ताम्र का भाजन ( सम्पूर्ण ) लेप करें ॥ ६ ॥

तद्वृक्षभाजनान्तस्थं निक्षिपेद्भानुसन्निधौ ।
उस पात्र में उस वृक्ष को रखकर सूर्य के समीप ( धूप में ) रक्खे ।

तेन विस्तारितं तैलमादायाम्बुजतन्तुभिः ॥ ७ ॥
कृतं वर्त्या युतं चैव दीपेन कृतकज्जलम् ।
कज्जलेनाञ्जयेन्नेत्रमदृश्यकरणं भवेत् ॥ ८ ॥

उससे विस्तारित तैल को लेकर कमलतन्तु से बत्ती बनाकर दीप जलाकर कज्जल बनावै, इस कज्जल से नेत्रों में अञ्जन करने से मनुष्य अदृश्य होता है ॥

अरुणाङ्कोलबीजस्य तैलं सम्यक् समाहृतम् ।
तेन प्रलिप्य ताम्रस्य पत्राणि पुटपाकयोः ॥ ९ ॥
कालिकागन्धसंयुक्तं निष्कमात्रं कृते सति ।
विनिष्कमात्रं स्वर्णेन स्वयं कनकतां व्रजेत् ॥ १० ॥

अरुण अंकोल के बीज का अच्छी प्रकार तैल निकाल कर उससे ताम्र के पत्रों को प्रलिप्त कर पुटपाक बनाकर एक निष्क मिश्रित कर कालिका गंध से युक्त कर तथा विनिष्क मात्र स्वर्ण से स्वयं स्वर्ण हो जाता है ॥ ९-१० ॥

**विमर्द्य पारदं तेन मूषायामधरोत्तरम् ।**
**पुटीकृतं भवेत्तेन बध्येत च रसः क्षणात् ॥ ११ ॥**

पारद का उससे मर्दनकर मूषा में ऊपर-नीचे पुट देने से क्षणमात्र में रस का बन्ध होता है ॥ ११ ॥



## अथ लक्ष्मणाकल्पः

**कृष्णपक्षे चतुर्दश्यां गुरुपुष्ये च वा पुनः ।**
**संमन्त्र्य लक्ष्मणामूलं सोपचारं समुद्धरेत् ॥ १ ॥**

कृष्णपक्ष की चतुर्दशी को अथवा गुरुवार के पुष्य नक्षत्र को अभिमन्त्रित करके लक्ष्मणा मूल को उपचार के साथ उद्धृत करे ॥ १ ॥

**ॐ सर्वार्थसाधिन्यै लक्ष्मणायै स्वाहा ।**
**शुभं तन्मूलमादय कृष्णोन्मत्तफलस्थितम् ॥ २ ॥**
**त्रिदिनं च स्वशुष्केण मन्त्रं चूर्णेन वश्यकृत् ।**

उसके शुभ मूल को ग्रहण करके काले धतूर के फल पर स्थित तीन दिन तक स्वतः ही सूखे चूर्ण से मन्त्र वश में करने वाला होता है ॥ २ ॥

**रोचनालक्ष्मणामूलं चन्दनं कुङ्कुमं समम् ॥ ३ ॥**
**मुखलेपादितः सर्वमवश्यनरमोहनम् ।**

रोचना ( गोरोचन ), लक्ष्मणा-मूल, चंदन और कुंकुम समान भाग में मिलाकर मुख में लेपादि करने से सभी बिना वश के मनुष्यों को वश में करता है ॥ ३ ॥

**उद्धरेल्लक्ष्मणामूलं रक्तचन्दनमिश्रितम् ॥ ४ ॥**
**यस्मै कस्मै प्रदातव्यं स वश्यो भवति क्षणात् ।**



लक्ष्मणा-मूलको उखाड़ कर रक्तचन्दन के साथ जिस किसी को दे देने से वह क्षण भर में वश में होता है ॥ ४ ॥

**लक्ष्मणामूलतगरं सकुष्ठं नागकेसरम् ॥ ५ ॥**
**विलेपनादिदं लिङ्गे यावज्जीवं वशं नयेत् ।**

लक्ष्मणामूल, तगर, कुष्ठ और नागकेशर का लिङ्ग पर लेप करने से जीवन पर्यन्त वश में रखता है ॥ ५ ॥

**लक्ष्मणामूलतगरतिलकोऽतिजनप्रियः ॥ ६ ॥**

लक्ष्मणामूल और तगर का तिलक अधिक मनुष्योंको वशकारक होता है॥

**ॐ नमो महेश्वराय सर्वजनवशं कुरु कुरु स्वाहा ।**
**लक्ष्मणामूलसौवीराञ्जनके सममात्रके ॥ ७ ॥**
**कृत्वाञ्जयेदक्ष्यमूभ्यां भवेद्वश्योऽखिलो जनः ।**

लक्ष्मणामूल और सौवीरांजन को समान प्रमाण में लेकर दोनों आंखों में इनके अंजन से सम्पूर्ण प्राणी वश में होते हैं ॥ ७ ॥

**यन्मूलं तगरं सम्यग्वारिणा योज्य साम्यतः ॥ ८ ॥**
**ललाटे तिलकं कृत्वा स्यात् सर्वप्रियदर्शनः ।**

उसका मूल और तगर की समप्रमाण में जल से मिलाकर ललाट में तिलक करके सभी के लिए प्रियदर्शन मनुष्य होता है ॥ ८ ॥

**ॐ जयायै विजयायै स्वाहा ॥ ९ ॥**
**लक्ष्मणायाश्च मूलेन रजसा चन्दनस्य च ।**
**धूपयेत् सर्वमङ्गं च स भवेदखिलप्रियः ॥ १० ॥**

लक्ष्मणा के मूल और चन्दन के सूक्ष्म चूर्ण से सम्पूर्ण शरीर का धूपन करने से मनुष्य सभी का प्रिय हो जाता है ॥ ९-१० ॥

**मूलं हि लक्ष्मणायाश्च क्षीरेण सह पाययेत् ।**
**पुंसस्तस्य विनश्यन्ति सर्वाण्यर्शांसि मासतः ॥ ११ ॥**

एक मास तक लक्ष्मणा का मूल क्षीर के साथ पान करने से मनुष्य के सभी अर्श नष्ट हो जाते हैं ॥ ११ ॥

**प्रातर्मूलं लक्ष्मणायाः पिबेद् ब्राह्मीघृतेन च ।**
**पक्षेणैकेन बालानां ग्रहं नाशयति ध्रुवम् ॥ १२ ॥**

एक पक्ष तक लक्ष्मणा का मूल ब्राह्मीघृत के साथ प्रातःकाल पान करने से बालकों के ग्रहों को निश्चय ही नष्ट करता है ॥ १२ ॥

ॐ नमो भगवते महेश्वराय स्वाहा ।
लक्ष्मणामूलमाबद्धं मूर्ध्नि चोरभयं तथा ॥ १३ ॥
व्याघ्रदपि भयं तस्य न क्वचिच्च समुद्भवेत् ।
हस्ते च लक्ष्मणामूलं बद्ध्वा युधि भजेज्जयम् ॥ १४ ॥

लक्ष्मणा के मूल को शिर पर बांधने से चोर से तथा व्याघ्र से कभी भी भय नहीं होता है ।

हाथ में लक्ष्मणा-मूल बांधने से युद्ध में विजय होती है ॥ १३-१४ ॥

ॐ हरिहराय स्वाहा ।
लक्ष्मणामूलमालिप्य सर्वेषां च भवेत्प्रियः ॥ १५ ॥

लक्ष्मणा मूल का लेप करके मनुष्य सभी का प्रिय होता है ॥ १५ ॥

ॐ वश्यं मे स्वाहा तन्मूलाय नमः ।
शिलोदकेन तन्मूलतिलकं वशयेन्नृपम् ॥ १६ ॥

उसके मूल का शिलोदक से तिलक राजा को वश में करता है ॥ १६ ॥

तन्मूलं पलमात्रं हि गोक्षीरेण विमिश्रयेत् ।
चतुर्मासं पिबेद्वन्ध्या ध्रुवं पुत्रवती भवेत् ॥ १७ ॥

पलमात्र उसके मूल को गोक्षीर में मिलाकर चार मास सेवन करने से बन्ध्या भी निश्चित ही पुत्रवती होती है ॥ १७ ॥

---

## अथेश्वरी कल्पः

ॐ ईश्वरि सर्वदानववशंकरि राक्षस्यै स्वाहा ।
इति मन्त्रेण गन्धाद्यैरभ्यर्च्यावेष्ट्य सूत्रकैः ॥ १ ॥
त्रिधा घटं हि ताम्रोत्थं मार्तिकं वा सुपूजयेत् ।

इस मंत्र से गंधादि से पूजा करके सूत से तीन बार आवेष्टित कर पुनः ताम्र के अथवा मिट्टी के घड़ा का पूजन करें ॥ १ ॥



ततः प्रदक्षिणं कृत्वा भक्त्वा स्तुत्या नमस्य च ॥ २ ॥
तत्र सूर्योदयात् पूर्वं मन्त्रमष्टोत्तरं जपेत् ।

बाद में परिक्रमा करके भक्तिपूर्वक स्तुति और नमस्कार करके सूर्योदय से पूर्व ही १०८ बार मन्त्र का जप करें ॥ २ ॥

अस्याश्च पादलेपेन दिनेनैकेन मानवः ॥ ३ ॥
विंशति योजनान्येत्य पुनरायाति चालयम् ।

इसका पैर में लेप करने से एक दिन में मनुष्य २० योजन जाकर के पुनः घर लौट आता है ॥ ३ ॥

ईश्वरीपुष्पपिष्टस्य लेपनं जनमोहनम् ॥ ४ ॥

ईश्वरी के पुष्प को घिसकर लेप करने से मनुष्य वश में होते हैं ॥४॥

सद्यो जयति दुर्वारं वैरिणं विजयी भवेत् ।

तुरत दुर्जर शत्रुओं को जीतकर विजय होती है ।

अभ्यज्याज्यं मूर्ध्नि पुष्ये मन्त्रमुच्चार्य पूर्ववत् ॥ ५ ॥
ईश्वरी सकलां भीतिं छिनत्ति न हि संशयः ।

पुष्य नक्षत्र में मंत्र का उच्चारण करके शिर पर घृत के साथ लेप करने से ईश्वरी सभी प्रकार के भय को नष्ट करती है इसमें सन्देह नहीं है ॥ ५ ॥

सहदेवीश्वरीमूलं मयूरशिखया सह ॥ ६ ॥
संमन्त्र्य मानिनीं स्वस्थः स्ववशां कुरुते सदा ।

सहदेवी और ईश्वरी मूल को मयूरशिखा के साथ अभिमन्त्रित करके स्वस्थ मनुष्य मानिनी को भी अपने वश में करता है ॥ ६ ॥

ईश्वरीमूलमादाय ग्रहणे चन्द्रसूर्ययोः ॥ ७ ॥
चूर्णितं नेत्रयोर्न्यस्तं काञ्जिकेन विषापहम् ।

सूर्य और चन्द्रमा के ग्रहण में ईश्वरी का मूल ग्रहण करके चूर्ण बनाकर कांजी के साथ नेत्र में लेप करने से विष को दूर करता है ॥ ७ ॥

तदेवासनसंयुक्तं जङ्गमादिविषं हरेत् ॥ ८ ॥

वही आसन के साथ जंगमादि विष को नष्ट करता है ॥ ८ ॥

---

## अथ शाल्मलीकल्पः

सितारुणहरित्पीतवर्णैं सा स्याच्चतुर्विधा ।

वह सफेद, अरुण, हरित और पीतवर्ण आदि से चार प्रकार का होता है ॥

मूलं संपीड्य शाल्मल्यास्त्रिलोहपरिवेष्टितम् ॥ १ ॥
वक्त्रान्तरगतं तत् स्याददृश्यकरणं ध्रुवम् ।

शाल्मली के मूल को पिण्ड बनाकर तीनों लौह से वेधित करके मुख में धारण करने से निश्चित रूप से अदृश्य करता है ॥ १ ॥

तन्मूलवत्फलं तैलं सितया सह सेवितम् ॥ २ ॥
सप्ताहं तेन संसिद्धं भवेत् षोडशवद्वयः ।
अनेकनारीरमणो दीर्घजीवी स्मरोपमः ॥ ३ ॥

उसके मूल के समान ही फल और तैल को मिश्री के साथ एक सप्ताह सेवन करने से १६ वर्ष के समान आयु हो जाती है और वह अनेक स्त्रियों के साथ संभोग करता है, दीर्घकाल तक जीवित रहता है तथा कामदेव के समान कान्ति वाला होता है ॥ २-३ ॥

तद्वृक्षरन्ध्रे निक्षिप्य सरन्ध्रां लोहनालिकाम् ।
यावत् पूर्येत लोहस्य द्वारं तत्पयसा ततः ॥ ४ ॥
विकृस्यात्र विमर्द्येमं दहेद् गजपुटाग्निना ।
तं मिश्रितरसं वस्तु मण्डलं मधुना पिबेत् ॥ ५ ॥
अनेककामरूपी स्यान्नानारूपं प्रयच्छति ।
अदृश्यत्वं स्वयं प्राप्य देवतुल्यो भवेदयम् ॥ ६ ॥

उसके वृक्ष के छिद्र में सच्छिद्र लौह की नलिका डालकर जब वह नलिका उसके दूध से पूर्ण हो जावे तब निकालकर चूर्ण कर गजपुट में फूंक देवे, उस मिश्रित रस को मण्डल भर जो मधु के साथ पान करता है वह इच्छानुसार अनेक प्रकार का रूप धारण करने वाला हो जाता है। स्वयं अदृश्यता को प्राप्त करके देवता के समान वह हो जाता है ॥ ४-६ ॥

तद्रसेन द्रुतं तारं कृष्णवर्णत्वमाप्नुयात् ।

उसके रस से पिघलाई गई चांदी कृष्ण वर्ण की हो जाती है।



त्रिवारं तद्रसालिप्तं तत्पुष्पं सममिश्रितम् ॥ ७ ॥
नीलीरसेन नेत्रस्थमदृश्यं कुरुते नरम् ।

तीन बार उसके रस से लेप करके तथा समान प्रमाण में उसके पुष्प से मिश्रित नीली-रस नेत्र में स्थित होने पर मनुष्य को भी अदृश्य कर देता है ॥ ७ ॥

तत्पुष्पभृङ्गराजाभ्यां तैलमुत्पलकन्दजम् ॥ ८ ॥
पाचयेदायसे पात्रे स्वकेशं लेपयेन्नरः ।
सप्ताहात् पलितं हन्ति कपालतलरञ्जनम् ॥ ९ ॥

उसके फूल और भृङ्गराज से युक्त उत्पल ( कमल ) के कन्द का तैल लौह पात्र में बनावे और अपने बालों में लेप करे, यह एक सप्ताह में पलित को नष्ट करता है, अधिक क्या कपाल तल को भी रंजित करता है ॥ ८-९ ॥

मूलं च श्वेतशाल्मल्याः खर्परं हेममाक्षिकम् ।
मधुना नेत्रयोर्न्यस्य कदलीपत्रवेष्टनात् ॥ १० ॥
नष्टद्रव्यं निधानं वा भूगतं तेन पश्यति ।

श्वेत शाल्मली का मूल, खर्पर और स्वर्णमाक्षिक को मधु से आंखों में लगाकर ऊपर से केला के पत्ता से ढकने से पृथ्वी में स्थित नष्ट द्रव्य अथवा खजाने को देखता है ॥ १० ॥

तत्क्षीरमिश्रतैलेन पलं सूतं सुमर्दितम् ॥ ११ ॥
लवङ्गतुलया सार्धं वङ्गं स्तम्भयते ध्रुवम् ।

उसके दुग्ध से मिश्रित तैल से मर्दित किया गया एक पल परिमित पारद लवंग की एक तुला के साथ वंग निश्चित ही स्तम्भन करता है ॥ ११ ॥

ससितं तद्भवं मूलं पयसा सह सेवितम् ॥ १२ ॥
अनेकनारीरमणं करोति स्मरसन्निभम् ।

मिश्री के साथ उसका मूल दूध के साथ सेवन करने से अनेक स्त्रियों का रमण कामदेव के समान करता है ॥ १२ ॥

तन्मूलवाजिगन्धाभ्यां पूगाभ्यां वाससा भृशम् ॥ १३ ॥
घृतेन पाचितापूपान् एकविंशदिनं भजेत् ।
नवनागबलः श्रीमान् स्यादम्लक्षारवर्जनात् ॥ १४ ॥
प्रगल्भकामिनीवृन्दमदनिर्मथनक्षमः ।

उसका मूल, वाजिगन्ध, दो प्रकार की सुपाड़ी, तथा वस्त्र से घृत-संयोग से बनाया गया अपूप ( मालपूआ ) का अम्लक्षार का वर्जन करते हुए २१ दिन तक सेवन करने से कान्तिसंपन्न मनुष्य नव हाथी के समान बलवान् हो जाता है और मदमस्त रमणीसमूह के मद के दलन में समर्थ होता है ॥ १३-१४ ॥

हरितस्वर्णशाल्मल्याः पूर्ववत्तैलमाहरेत् ॥ १५ ॥
विलिप्तं रजतं तेन साधितं स्वर्णतां व्रजेत् ।

हरित और स्वर्ण ( पीत ) वर्ण की शाल्मली का पूर्वोक्त विधि से तैल ग्रहण करे, उससे लिप्त रजत ( चांदी ) साधन करने से स्वर्णत्व को प्राप्त होता है ॥ १५ ॥

आज्येन पीतं तत्तैलं कारयेद्दिव्यदेहताम् ॥ १६ ॥

घृत के साथ सेवन करने से वह तैल दिव्यदेहत्व को करता है ॥ १६ ॥

तत्तैलं क्षौद्रसंयुक्तं सर्वरोगहरं नृणाम् ।
महोत्पलसुगन्धी स्यात् कनकद्युतिभास्वरः ॥ १७ ॥

मधु के साथ वह तैल मनुष्यों के सभी रोगों को नष्ट करता है। तथा महा उत्पल ( कमल ) के समान सुगन्ध वाला और स्वर्ण की कान्ति के समान चमकदार बनाता है ॥ १७ ॥

तत्पुष्पस्वरसं पीत्वा बालार्ककरसंनिभः ।
अनेककालजीवी स्यादमृतेन यथा सुराः ॥ १८ ॥

उसके पुष्प का स्वरस पान करके मनुष्य बाल सूर्य ( उदीयमान सूर्य ) के किरणों के समान शोभायमान अनेक काल तक जीवित रहता है, जिस प्रकार अमृत से देवता लोग अमर हैं ॥ १८ ॥

आदायारुणशाल्मल्यास्तरुणाङ्घ्रिभवं रसम् ।
सिताक्षौद्रयुतं पीत्वा विन्देद्वज्रनिभं वपुः ॥ १९ ॥

अरुण शाल्मली के तरुण अंघ्रि ( निचली भाग अर्थात् मूल ) का रस ग्रहण करके मिश्री और शहद के साथ सेवन करने से वज्र के समान शरीर धारण करता है ॥ १९ ॥

पूर्ववत्तद्रसं पीत्वा क्षौद्रेण च विभावितम् ।
महायुवत्वं वृद्धोऽपि स्वयं कालेन याति च ॥ २० ॥



मधु से भावित कर पूर्ववत् उसके रस को पीकर समय से वृद्ध भी अति युवा बन जाता है ॥ २० ॥

पुष्यर्क्षे मधुना तस्य प्रसूनजनितं रतः ।
आज्येन सेवितं कुर्याद् बलं तद्वत्सरात् क्रमात् ॥ २१ ॥

पुष्य नक्षत्र में उसके पुष्प का चूर्ण मधु और घृत से सेवन करने से वत्सर क्रम से बल-वृद्धि करता है ॥ २१ ॥

यः कोऽपि सेवते नित्यं शाल्मलीकल्पमुत्तमम् ।
जरामरणहीनस्य दारिद्र्यं तस्य नश्यति ॥ २२ ॥

जो कोई भी नित्य शाल्मली कल्प का सेवन करता है, बुढ़ापे और मृत्यु से रहित उसका दारिद्र्य नष्ट होता है ॥ २२ ॥

---

## अथ काकजङ्घाकल्पः

काकजङ्घां समूलाग्रां पुष्ये सम्यक् समुद्धरेत् ।
छायाशुष्कां ततः कुर्याच्च श्लक्ष्णचूर्णं समाचरेत् ॥ १ ॥

पुष्य नक्षत्र में मूल और अग्रभाग समेत काकजंघा को भलीभांति उखाड़ कर छाया में सुखा कर महीन चूर्ण बना लेवे ॥ १ ॥

सिताश्रपुङ्खामूलेन सघृतं तद्रजो भजेत् ।
षण्माससेवनात् कर्षैरस्त्रशस्त्रनिवारणम् ॥ २ ॥
कुर्याद्वज्रसमं देहं त्रोटनं शस्त्रसंहतेः ।
क्षीरेण पीतं तच्चूर्णं वज्रकायं करोति च ॥ ३ ॥

उसका चूर्ण मिश्री और शरपुंखा ( शरपुंखा ) के मूल के साथ घृत मिलाकर सेवन करे।

छ मास तक कर्ष परिमित सेवन करने से अस्त्र-शस्त्र का निवारण होता है, देह वज्र के समान हो जाती है तथा अस्त्र-शस्त्र टूट जाते हैं।

दूध के साथ उसका चूर्ण पीने से वज्र के समान देह होती है ॥ २-३ ॥

मण्डलं सेवते यस्तु वृद्धोऽपि तरुणायते ।

मण्डल का जो सेवन करता है, वह वृद्ध भी युवत्व को प्राप्त होता है ।

दध्यादनेन तच्चूर्णं भुक्तं शस्त्रनिवारणम् ॥ ४ ॥

उसका दधि और भात के साथ चूर्ण भक्षण करने से शस्त्र का निवारण करता है ॥ ४ ॥

यावाद्विण्मूत्रयोः स्तम्भो न स्यात्तावच्च भुज्यताम् ।
ककारादिगणांस्त्यक्त्वा तावदन्यांश्च भक्षयेत् ॥ ५ ॥

जब तक मल और मूत्र का अवरोध न हो जावे तब तक भक्षण करे, तथा ककारादिगण को छोड़ कर अन्य भक्षण करें ॥ ५ ॥

तच्चूर्णमीश्वरीमूलयुतं गोघृतवेष्टितम् ।
पादलेपेन दिव्यः स्याद्दिनेनैकेन मानवः ॥ ६ ॥

उसका चूर्ण और ईश्वरीमूल को गोघृत से वेष्टित कर पाद में लेप करने से मनुष्य एक दिन में ही दिव्य हो जाता है ॥ ६ ॥

सोऽयं वज्रशरीरी स्याद् दृष्टः सिद्ध इवापरः ।

वही वज्र के समान शरीरधारी होकर दूसरे सिद्ध के समान दिखलाई पड़ता है ।

व्रणं हन्तीश्वरीमूलं काकजङ्घारसैः प्लुतम् ॥ ७ ॥

काकजंघा के रस से भावित ईश्वरीमूल व्रण को नष्ट करता है ॥ ७ ॥

पत्राणि काकजङ्घाया गोमूत्रेण विमर्दयेत् ।
उपयुञ्ज्यादास्यरोगे सुगुणस्त्वरितं भवेत् ॥ ८ ॥

काकजंघा के पत्रों को गोमूत्र से विमर्दित कर मुखरोग में उपयोग में लावें तो शीघ्र श्रेष्ठ गुणसंपन्न होता है ॥ ८ ॥

मूलं च काकजङ्घाया भृङ्गमामलकीरसम् ।
तिलतैलेन विपचेत् तैलं लेपे प्रशस्यते ॥ ९ ॥

काकजंघा का मूल, भृङ्गराज और आमला का रस; इन्हें तिलतैल में पकावे, यह तैल लेप में प्रशंसनीय है ९ ॥

अभ्यङ्गेन विनश्येच्च खल्वाटपलितादिकम् ।

अभ्यंग से खल्वाट और पलितादिक नष्ट होते हैं ।





उत्पाट्य काकजङ्घाया मूलं मेषासृजि क्षिपेत् ॥ १० ॥
ततः संमर्द्य तत्तेन रुधिरेण विलेपयेत् ।
सूत्रमेकं च तेनैव कारयेद् बन्धनं करे ॥ ११ ॥
ज्वरात् प्रमुच्यते क्षिप्रं पुमान् याति सुखं भृशम् ।

काकजंघा के मूल को उखाड़कर मेष ( भेड़ा ) के रक्त में डाल देवे और मर्दन कर उस रुधिर से एक सूत्र को लिप्त करे और उसी सूत्र को हाथ में बांधे तो शीघ्र ही ज्वर से मनुष्य मुक्त होता और अधिक सुख प्राप्त करता है ॥ १०–११ ॥

मूलमुष्णोदकैः पीतं स्तम्भयेद्वीर्यमञ्जसा ।
तदेवाज्येन पीतं सन्नाशयेदुदरामयान् ॥ १२ ॥

उसका मूल उष्णोदक से पान करने से शीघ्र ही वीर्य का स्तम्भन करता है और वही घृत से पीने से उदरगत रोगों को नष्ट करता है ॥ १२ ॥

शीतोदकेन मधुना पीतं छर्दिं निहन्ति च ।

शीतजल और मधु के साथ पीने से छर्दि ( वमन ) नाश करता है ।

पीतं क्षीरेण रुधिरस्रावं स्तम्भयति ध्रुवम् ॥ १३ ॥
बद्धं कर्णे तु तन्मूलमक्षिरोगानपोहयेत् ।

दुग्ध से साथ पीने से रक्तस्राव निश्चित रुक जाता है । कान में उसका मूल बांधने से आंख के रोगों को नष्ट करता है ॥ १३ ॥

वशीकरोति सर्वांश्च रोचनातिलकेन च ॥ १४ ॥

रोचना (गोरोचन) मिलाकर तिलक करने से सभी को वश में करता है ॥

मधुना हिङ्गुलैश्चापि पीतं प्लीहोदरं हरेत् ।

मधु और हिंगुल से पान करने से प्लीहोदर को नष्ट करता है ।

कटुतैलेन तत्पीतं पित्तं वातं च नाशयेत् ॥ १५ ॥

कटु तैल ( सरसों का तैल ) से पान करने से पित्त और वात का नाश करता है ॥ १५ ॥

गुडेनोष्णोदकेनापि श्लेष्माणं विनिवारयेत् ।

गुड और उष्णोदक से ( पान करने से ) श्लेष्मा का नाश करता है।

तत् पीतं गुडतक्राभ्यां मूत्रकृच्छ्रमपोहयेत् ॥ १६ ॥

गुड़ और तक्र ( मट्ठा ) के साथ पान करने से मूत्रकृच्छ्र को नष्ट करता है ॥ १६ ॥

महिषीपयसा पीतं क्षयं हन्ति न संशयः ।

भैंस के दूध से पीने से क्षयरोग का नाश निश्चित रूप से करता है ।

मूलं तदेकवर्णाया गोः पीतं पयसा सह ॥ १७ ॥
ऋतुस्नाता हि वन्ध्यापि पुत्रं सूते वधूस्तथा ।

उसके मूल को एक रंग की गाय के दूध से ऋतुस्नान कर के पीने से वन्ध्या स्त्री भी पुत्र उत्पन्न करती है ॥ १७ ॥

हेम्ना सह धृतं हस्ते शस्त्रस्तम्भं करोति च ॥ १८ ॥

स्वर्ण के साथ हाथ में धारण करने से शस्त्र-स्तम्भ करती है ॥ १८ ॥

धृतं शिरसि पीडानां शान्तिं च कुरुते सदा ।

शिर पर धारण करने से हमेशा पीड़ा की शान्ति करती है ।

भल्लातकेन तन्मूलं भुक्तं कुष्ठान् विनाशयेत् ॥ १९ ॥

भल्लातक के साथ उसका मूल भक्षण करने से कुष्ठों का नाश करता है ॥

पत्राणि तस्य पिष्ट्वा च सप्ताहं लेपयेच्छिरः ।
पुनः पुनश्च खल्वाटः केशपूर्णशिरा भवेत् ॥ २० ॥

उसके पत्तों को पीसकर बार बार एक सप्ताह लेप करने से खल्वाट भी केश से पूर्ण कपाल वाला हो जाता है ॥ २० ॥

ॐ काकजङ्घे वरदे वरदे सर्वकार्याणि साधय साधय उच्चाटयोच्चाटय सोदयपुत्रबान्धवम् अमुकं मातर्देवि मम जिह्वाग्रं हुं फट् स्वाहा । श्मशानाङ्गारेण नीले वस्त्रे बध्वारिगृहे मुक्ता उच्चाटनं भवति । कृत्तिकारोहिण्योरुद्धृतं धनधान्यवृद्धिः । रेवत्यां सर्वकार्याणि । पूर्वाभाद्रायां पञ्चाङ्गमस्य मस्तके धार्यम् । अतो व्यवहारे जयः ॥

श्मशान की भस्म से नील वस्त्र में में बांध कर शत्रु के घर में छोड़ने से उच्चाटन होता है । कृत्तिका और रोहिणी नक्षत्र में उखाड़ने से वृद्धि होती है । रेवती नक्षत्र में उखाड़ने से सब प्रकार की सिद्धि होती है । पूर्वाभाद्रपद नक्षत्र में इसका पंचाग मस्तक पर धारण करे । इससे साह व्यवहार करने में विजय होती है ।



---

## अथ क्षिप्राकल्पः

क्षिप्रा हि यमुनातीरे पश्चिमे च मरौ भवेत् ।
काण्डस्त्वङ्गुलितुल्यः स्याच् शुष्का वर्षासु सा भवेत् ॥ १ ॥

क्षिप्रा यमुना के पश्चिम तट पर मरुभूमि ( रेगिस्तान ) में होती है । इसका काण्ड ( तना ) अंगुली के समान मोटा होता है और यह वर्षा ऋतु में सूख जाती है ॥ १ ॥

प्ररोहति पुनः सा तु हेमन्ते च समन्ततः ।
क्षिप्रं तु वर्धते सा तु गौरप्येनां तु भक्षयेत् ॥ २ ॥

हेमन्त में पुनः बढ़ती है, तथा शीघ्र बढ़ती है और गायें भी इसे भक्षण करती हैं ॥ २ ॥

भग्ना च स्रावयेत् क्षीरं पुष्पं चित्रकसन्निभम् ।
फलमङ्गुलितुल्यं स्याद् विद्धयेयं तां महौषधिम् ॥ ३ ॥

इसको तोड़ने से दूध निकलता है, और इसका फूल चित्रक के समान होता है। फल अंगुली के समान होता है । इस प्रकार इस महौषधि को जाने ॥

ग्रहणेऽपि च रक्षार्थमुच्चरेन्मन्त्रमुत्तमम् ।
मन्त्रेणानेन भूः श्रीश्च प्रसन्ना पार्वती च सा ॥ ४ ॥

ग्रहण काल में भी रक्षा के लिए ( इसका ) मंत्र उच्चारण करे, इस मंत्र से भूः ( पृथ्वी ), श्रीः ( लक्ष्मी ) और पार्वती प्रसन्न होती हैं ॥ ४ ॥

प्रातरुत्पाट्य तन्मूलमक्षतं तु समाहितः ।
आलोडयेन्नागवङ्गौ तारं भवति तत्क्षणात् ॥ ५ ॥

प्रातःकाल अक्षत ( बिना कहीं से कटा-फटा ) उसका मूल ( जड़ ) एकाग्रचित्त से उखाड़कर उससे नाग और वंग को आलोडित करे तो उसी क्षण तार ( चांदी ) हो जाता है ॥ ५ ॥

ॐ नमः कन्दाय विपरीतिभक्षाय(?) अमृतं स्वाहा ।
इति मन्त्रेण सप्तवारमभिमन्त्र्य मुखे क्षिप्त्वात्मानं खेचरतां नयेत् ।

ॐनमः··· इस मंत्र से सात वार अभिमंत्रित करके मुख में रखने से मनुष्य अपने को खेचरता ( देवत्व ) को प्राप्त करता है।

रसं तस्यास्तु निष्पीड्य संगृह्य च समाहितः ।
घृतं च मधुना त्रीणि समभागानि योजयेत् ॥ ६ ॥

एकाग्र होकर उसका रस निचोड़ कर एकत्रित करे, पुनः घृत और मधु उसी प्रमाण में मिलावें ॥ ६ ॥

पीते तदा क्षणादेव मृतोऽपि प्रतिबुध्यते ।
दिव्यतेजा महारूपो जीवेदाचन्द्रतारकम् ॥ ७ ॥

इसे पीने से उसी क्षण मृत व्यक्ति भी क्षणमात्र में जग जाता है और दिव्य तेजःसंपन्न होकर चन्द्रमा और तारागणों की स्थिति-पर्यन्त जीवित रहता है ॥ ७ ॥

क्षिप्रारसं तु संगृह्य काकजङ्घारसं तथा ।
शुद्धसूतं चारनाले मर्दयेद्याममात्रकम् ॥ ८ ॥
तत्क्षणाज्जायते भस्म शुष्कं वह्नाविवेन्धनम् ।

क्षिप्रा रस, काकजंघारस, शुद्ध सूत ( पारद ) और आरनाल को एक याम पर्यन्त मर्दन करने से उसी क्षण अग्नि में शुष्क इंधन के समान पारद भस्म हो जाती है ॥ ८ ॥

## अथ करञ्जकल्पः

करञ्जद्रुमपञ्चाङ्गं सितया सह सेवितम् ।
वारिणा तज्जटाचूर्णं छायामयनिबर्हणम् ॥ १ ॥

करंज वृक्ष के पंचांग का मिश्री के साथ सेवन करने से तथा जल से उसकी शिखा का चूर्ण सेवन करने से छायामय ( छाया रोग-न्यच्छ, व्यङ्ग आदि ) नष्ट होते हैं ॥ १ ॥



तस्योत्तरगतं मूलं सितादुग्धेन पुष्टिकृत् ।

उसका उत्तर की तरफ गया हुआ मूल मिश्री और दूध के साथ सेवन करने से ताकत देनेवाला होता है ।

सितेतरतलोद्भूतं तन्मूलं पयसा सह ॥ २ ॥
सेवितं च निहन्त्याशु पाण्डुरोगं सुदुस्सहम् ।

सित (श्वेत ) से अन्य वर्ण का जमीन में स्थित उसका मूल दूध के साथ सेवन करने से अति भयंकर पाण्डुरोग को नष्ट करता है ॥ २ ॥

गवां तक्रेण तन्मूलं चूर्णमाज्येन सेवितम् ॥ ३ ॥
मण्डलप्रमुखान् कुष्ठान् तथा दुष्टान् व्रणाञ्जयेत् ।

उसका मूल गाय के मट्ठा से तथा उसका चूर्ण घृत से सेवन करने से मण्डल आदि कुष्ठों को तथा दुष्ट व्रण ( Chronic wounds ) को नष्ट करता है ॥ ३ ॥

तैलेन तस्य पञ्चाङ्गचूर्णं सम्यग्व्रणापहम् ॥ ४ ॥

तैल से उसका पंचांग-चूर्ण अच्छी तरह से व्रण को नष्ट करता है ॥ ४ ॥

क्षीरेण पीतं तच्चूर्णं विरेकजनकं स्मृतम् ।

दूध से उसका चूर्ण पीने से विरेचन करने वाला होता है ।

शीताम्बुस्पर्शनात्तस्य वेगः शीघ्रं निरुध्यते ॥ ५ ॥

शीतल जल के स्पर्श से उसका वेग शीघ्र ही रुकता है ॥ ५ ॥

घृतेन पाचितो हन्ति मारुतस्य विजृम्भणम् ।

घृत से पकाया हुआ वायु में विजृम्भण ( फैलाव ) को नष्ट करता है ।

तैलेन पाचितो वातं कोमलं विनिवारयेत् ।
अपोहयेदसौ सन्धिवातं सम्यङ् न संशयः ॥ ६ ॥

तैल से पकाया हुआ कोमल वात निवारण करता है और अच्छी प्रकार से यह सन्धिवात को नष्ट करता है, इसमें सन्देह नहीं है ६ ॥

## अथ निर्गुण्डीकल्पः

श्रृणु देवि प्रवक्ष्यामि चौषधिं परमाद्भुताम् ।
धनधान्यकरीं देवि आयुरारोग्यवर्धनीम् ॥ १ ॥

हे देवि ! अति अद्भुत औषधि का वर्णन करता हूँ, जो कि धन-धान्य को बढ़ाने वाली है, तथा आयु और स्वास्थ्य-समृद्धि को बढ़ाने वाली है ॥ १ ॥

शान्तिपुष्टिकरीं देवि साक्षाद्देवस्वरूपिणी ।
निर्गुण्डीति समाख्याता सर्वलोकसुखावहा ॥ २ ॥

शान्ति और पुष्टि को करने वाली, अधिक क्या ? साक्षात् देव स्वरूप वाली ही है, निर्गुण्डी नामक वह सभी प्राणियों को सुख देनेवाली है ॥ २ ॥

तस्याहं सम्प्रवक्ष्यामि प्रयोगं श्रृणु सुन्दरि ! ।

हे सुन्दरि ! उसका मैं प्रयोग कह रहा हूं, उसे सुनो ।

निर्गुण्डीमूलमुद्धृत्य पुष्यार्के शोभने दिने ॥ ३ ॥

रविवार के दिन पुष्य नक्षत्र वाले अच्छे दिन में निर्गुण्डी के मूल को उखाड़ कर ॥ ३ ॥

निर्गुण्डीमूलचूर्णं तु गवां सर्पिः पलाष्टकम् ।
घृतं चैव तथा क्षौद्रं षोडशं क्षीरकं तथा ॥ ४ ॥
स्निग्धभाण्डे समालोड्य धान्यराशौ निधापयेत् ।

निर्गुण्डी मूल का चूर्ण, गोघृत आठ पल घृत और क्षौद्र ( मधु ) तथा षोडश ( पल ) दुग्ध को चिकने किये हुए पात्र में अच्छी प्रकार मिलाकर अनाज के ढेर में रख देवें ॥ ४–५ ॥

पूर्णे मासे तदुद्धृत्य सुदिने पुष्यसंयुते ॥ ५ ॥
बिडालपदमात्रं तु मासमात्रं प्रदापयेत् ।
वलीपलितनिर्मुक्तो जीवेद्वर्षशतत्रयम् ॥ ६ ॥

एक मास पूर्ण होने पर पुष्य युक्त उत्तम दिन में उसे उखाड़ कर बिडाल-पद ( १ कर्ष ) प्रमाण में एक मास तक देवे तो वली-पलित से रहित तीन सौ वर्ष तक जीवित रहता है ॥ ६ ॥

निर्गुण्डीमूलमादाय योऽजामूत्रेण संपिबेत् ।
नखदन्तं च केशाश्च सप्तरात्रात् पतन्ति हि ॥ ७ ॥



निर्गुण्डी के मूल को लेकर के जो मनुष्य बकरी के मूत्र से पान करता है उसके नख, दांत और केश सात रात में गिर पड़ते हैं ॥ ७ ॥

मासमात्रप्रयोगेण नाग्निना दह्यते नरः ।
तस्य मूत्रपुरीषेण शुल्वं भवति काञ्चनम् ॥ ८ ॥

एक मास इसके प्रयोग से मनुष्य अग्नि से नहीं जलता है और उसके मूत्र और मल से ताम्र स्वर्ण हो जाता है ॥ ८ ॥

निर्गुण्डीमूलमादाय तिलतैलेन भक्षयेत् ।
अष्टादशविधान् कुष्ठान् नाशयेदेकमासतः ॥ ९ ॥

निर्गुण्डी के मूल को ग्रहण करके तिल तैल से एक मास तक सेवन करें तो एक मास में १८ प्रकार के कुष्ठ नष्ट होते हैं ॥ ९ ॥

निर्गुण्डीमूलमादाय घृतेन सह यः पिबेत् ।
मासमात्रप्रयोगेण स स्यादाकाशगो ध्रुवम् ॥ १० ॥

निर्गुण्डी के जड़ को ग्रहण करके घृत के साथ एक मास तक प्रयोग करने से मनुष्य आकाशगामी निश्चित रूप से हो जाता है ॥ १० ॥

पुष्यर्क्षे ग्राहयेत् प्रातर्निर्गुण्डीमूलजां त्वचम् ।
शुष्कां कृत्वा विचूर्ण्याथ कर्षं कर्षं भजेत् सदा ॥ ११ ॥

पुष्य नक्षत्र में प्रातःकाल निर्गुण्डी के जड़ की छाल को ग्रहण करें, उसे सुखाकर चूर्ण बनाकर कर्ष मात्र परिमाण में सदा सेवन करें ॥ ११ ॥

अजामूत्रप्रलेपेन षण्मासादमरो भवेत् ।
वर्षमात्रप्रयोगेण शिवतुल्यो भवेन्नरः ॥ १२ ॥

बकरी के मूत्र के प्रलेप से ६ मास में अमर ( देवता ) हो जाता है तथा एक वर्ष के प्रयोग से शिव सदृश हो जाता है ॥ १२ ॥

अर्धवर्षमिदं चाज्यैर्लिहेत् स्यात् पूर्ववत्फलम् ।
तच्चूर्णं त्रिफला मुण्डी भृङ्गी निम्बगुडूचिके ॥ १३ ॥
वचा इमाः समा कृत्वा मध्वाज्याभ्यां लिहेत् पलम् ।
गुडेन तु विपाच्यैतत् पीतं सम्यग्विरेककृत् ॥ १४ ॥

इसको ६ मास तक घी के साथ चाटने से भी पूर्ववत् फल होता है ।

निर्गुण्डी चूर्ण, त्रिफला, मुण्डी, भृंगी, निम्ब, गुडूची, और वच को समान भाग में लेकर चूर्णकर घृत और मधु से एक पल परिमाण में चाटे।

गुड़ के साथ पकाकर इसका पान करने से अच्छी प्रकार विरेचन करने वाली होती है ॥ १३–१४ ॥

निर्यान्ति कृमयस्तस्य मुखादपि गुदादपि।
राजयक्ष्मादिरोगांश्च सप्ताहेन विनाशयेत् ॥ १५ ॥

उसके मुख और गुदा से क्रिमि निकलते हैं और राजयक्ष्मा आदि रोग एक सप्ताह सेवन करने से नष्ट होते हैं ॥ १५ ॥

मासत्रये जरां हन्ति जीवेद्वर्षशतत्रयम्।

तीन मास प्रयोग से वृद्धावस्था को नष्ट करती है और तीन सौ वर्ष तक की आयु होती है।

निर्गुण्डीमूलमादाय छायाशुष्कं विचूर्णयेत् ॥ १६ ॥

निर्गुण्डी के मूल को ग्रहण करके छाया में सुखाकर चूर्ण बनावे ॥ १६ ॥

सप्ताहं गोजले भुक्तं हन्ति सर्वान् गदानपि।

इसे एक सप्ताह तक गोजल ( गोमूत्र ) से भक्षण करने से सभी रोगों को नष्ट करता है।

अष्टादशपलं चैतच्चूर्णं द्वादश सर्पिषः ॥ १७ ॥
मधुनः षोडशपलमेकीकृत्य विधानतः।
संस्थापयेद्धान्यराशौ मासादूर्ध्वं समुद्धरेत् ॥ १८ ॥

यह चूर्ण १८ पल, घृत १२ पल और मधु १६ पल इन सबको विधान पूर्वक इकट्ठा करके धान्यराशि में रक्खे और एक मास से ऊपर होने पर निकालें ॥ १७–१८ ॥

समभ्यर्च्य गुरुं देवं पूजयेच्च विधानतः।
ब्राह्मणांश्च कुमारीश्च भोजयेत् पण्डितानपि ॥ १९ ॥

गुरु की पूजाकर, देवताओं की विधि से पूजा करे तथा ब्राह्मण, कुमारी और पण्डितों को भोजन करावें ॥ १९ ॥

गृहीत्वा विजने देशे शुचिर्भूत्वा समाहितः।
बिडालपदमात्रं तु भोजयेन्नियतो नरः ॥ २० ॥



अहन्यहनि भोक्तव्यं मासमेकं निरन्तरम्।

फिर उसको ग्रहण करके एकान्त देश में पवित्र और एकाग्र होकर विडाल-पद ( कर्ष ) के प्रमाण में नियम से प्रतिदिन एक मास तक सेवन करे ॥२०॥

ततो मासे व्यतिक्रान्ते सोऽयं भवति सुन्दरः ॥ २१ ॥

फिर एक मास व्यतीत होने पर वह सुन्दर हो जाता है ॥ २१ ॥

पीवरस्कन्धगात्रश्च भवेत् कुलिशसन्निभः।
वलीपलितनिर्मुक्तो दीर्घजीवी भवेन्नरः ॥ २२ ॥

मांसलकन्धे से युक्त शरीर वज्र के समान हो जाता है तथा वली और पलित से रहित मनुष्य दीर्घजीवी होता है ॥ २२ ॥

भवत्येवाक्षयं रेतो रन्तुं स्यात् स्त्रीशतं क्षमः।
प्रकामं भोजनं तस्य भवेद् भोक्तव्यमन्वहम् ॥ २३ ॥

उसका अक्षय वीर्य हो जाता है तथा सैकड़ों स्त्रियों के साथ रमण करने में समर्थ होता है तथा प्रतिदिन उसे बहुत अधिक भोजन करना चाहिए ॥ २३ ॥

विकारा मनसः शाम्यन्त्यक्षयः स च वर्धते।

मन के विकार शान्त होते हैं, और विना क्षीण हुए वह बढ़ता है।

यः प्रस्थचूर्णं निर्गुण्ड्या गोमूत्रेण पिबेन्नरः ॥ २४ ॥

जो एक प्रस्थ परिमित निर्गुण्डी का चूर्ण गोमूत्र के साथ पान करता है ॥

दसरात्रप्रयोगेण कुष्ठान्यष्टादशापि च।
नाशयेच्च महादेवि ! वायुर्मेघमिवाम्बरम् ॥ २५ ॥

इसके दसरात्रि तक प्रयोग करने से हे महादेवि ! जैसे वायु बादल का भेदन करता है उसी तरह अठारह प्रकार के कुष्ठ नष्ट होते हैं ॥ २५ ॥

अजामूत्रेण निर्गुण्ड्याश्चूर्णमेवं च यो भजेत्।
नखाः केशाश्च दन्ताश्च सप्ताहान्निपतन्ति हि ॥ २६ ॥

बकरी के मूत्र से निर्गुण्डी का चूर्ण इस प्रकार से जो भक्षण करता है उसके नख, केश और दन्त एक सप्ताह में गिर पड़ते हैं ॥ २६ ॥

द्विसप्ताहप्रयोगेण जायन्ते ते पुनर्नवाः।
न चाग्निना दह्यतेऽसौ न जले म्रियतेऽपि च ॥ २७ ॥

दो सप्ताह तक प्रयोग करने से वे फिर नवीन हो जाते हैं और वह अग्नि से न जलता है और न जल में ही मरता है ॥ २७ ॥

तद्देहस्पर्शनाल्लोहः स्वर्णं भवति तत्क्षणात् ।

उसके देह के स्पर्श करने से लोह उसी समय स्वर्ण हो जाता है ।

चतुस्सप्ताहयोगेन सिद्धिराकाशगामिनी ॥ २८ ॥

चार सप्ताह के प्रयोग से अकाश में गमन करने की सिद्धि होती है ॥२८॥

निर्गुण्डीचूर्णमादाय घृतेन सह संपिबेत् ।
कृष्णवर्णो नरो यस्तु स्वर्णतेजाः स जायते ॥ २९ ॥

निर्गुण्डी के चूर्ण को घृत के साथ पान करने से कृष्ण वर्ण का व्यक्ति स्वर्ण के समान कान्तिवाला होता है ॥ २९ ॥

निर्गुण्डीचूर्णमादाय पिबेद् गोपयसा पुमान् ।
सप्तरात्रप्रयोगेण स्यात् किन्नरसमध्वनिः ॥ ३० ॥

निर्गुण्डी के चूर्ण को गौ के दुग्ध के साथ सेवन करने से मनुष्य किन्नर के समान गला वाला होता है ॥ ३० ॥

निर्गुण्डीचूर्णमादाय पिबेच्छिशिरवारिणा ।
सप्तरात्रप्रयोगेण वलवीर्यं प्रवर्धते ॥ ३१ ॥

निर्गुण्डी-चूर्ण को शीतल जल से सात रात तक प्रयोग करने से बल और वीर्य बढ़ता है ॥ ३१ ॥

चतुस्सप्ताहयोगेन वर्धते तेज उत्तमम् ।

चार सप्ताह प्रयोग करने से उत्तम तेज की वृद्धि होती है ।

निर्गुण्डीमूलमुद्धृत्य गृहे संस्थापयेद् बुधः ॥ ३२ ॥
नश्यन्ति सर्वविघ्नाश्च गृहे नागाश्च सर्वदा ।

निर्गुण्डी की जड़ को उखाड़कर विद्वान् घर में रक्खे, इससे सभी विघ्न नष्ट होते हैं तथा घर में सर्प नहीं रहते हैं ॥ ३२ ॥

अथ निर्गुण्डीभक्षणमन्त्रः—ॐ ह्री हुं फट् स्वाहा । अनेनाष्टोत्तरशतं जपेत् ।

निर्गुण्डी भक्षण करने का मन्त्र—ॐह्रीं···इससे १०८ बार जप करें ।

ॐ नमो नानारुपाय शान्तपापाय कुबेराय स्वाहा । इति मन्त्रेण सप्तवारमभिमन्त्र्य निर्गुण्डीं भक्षयेत् ।



मन्त्र से सात वार अभिमंत्रित करके निर्गुण्डी का भक्षण करें ।

षाष्टिकं च सगोक्षीरं मुष्टिकोदनभक्षणम् ।
भूगृहान्ते स्थितिर्मासपर्यन्तं भक्षयंस्त्विदम् ॥ ३३ ॥

इसको भक्षण करते हुए एक मास तक षष्टिक ( साठी चावल ) का भात मुष्टिक ( मुट्ठी ) प्रमाण में लेकर गोदुग्ध के साथ भक्षण करे तथा पृथ्वी के गर्भगृह में वास करे ॥ ३३ ॥

## अथेन्द्रवारुणीकल्पः

इन्द्रवारुणिकामूलमहोरात्रमुपोषितः ।
पुष्यर्क्षे चोद्धरेत्तच्च संयोज्य कटुभिस्त्रिभिः ॥ १ ॥
अजामूत्रेण पिष्ट्वा च वटीं कुर्याद् द्विगुञ्जिकाम् ।
छायायां शोषयेत् सम्यक् ततः खादेद् घृतेन च ॥ २ ॥

दिन रात उपवास करके पुष्य नक्षत्र में इन्द्रवारुणीमूल को उखाड़े तथा त्रिकटु ( सोंठ, मिर्च, पीपर ) से युक्त कर बकरी के मूत्र से पीस कर दो गुञ्जा प्रमाण की वटी बना लेवें । इसे अच्छी प्रकार से छाया में सुखाकर घृत के साथ भक्षण करे ॥ १–२ ॥

चन्दनेन च रक्तेन विमर्द्य विलिहेच्चनाम् ।
यं यं स्पृशति सर्वोऽपि वश्योऽस्य स भवेन्नरः ॥ ३ ॥

रक्तचन्दन से मर्दन करके चाटने से जिस किसी को स्पर्श करेगा वह सभी उसके वश में हो जाता है ॥ ३ ॥

गुटिका सा मुखे क्षिप्ता शुक्रं स्तम्भयति ध्रुवम् ।
गुटिकां चणकपत्रस्य रसेन परिमर्दयेत् ॥ ४ ॥
श्लक्ष्णेन तेन ताम्रस्य पत्राणि च विलेपयेत् ।
ततो दद्याद्गजपुटं भस्मीभवति तद् ध्रुवम् ॥ ५ ॥

इस गुटिका को मुख में रखने से शुक्र ( वीर्य ) का स्तम्भ निश्चित रूप से करती है ।

इस गुटिका को चणक ( चना ) की पत्ती के रस से मर्दन करे, जब वह महीन हो जावे तो उससे ताम्र के पत्रों को लिप्त करके गजपुट में फूँक देवें, वह निश्चित रूप से भस्म हो जाता है ॥ ४–५ ॥

ताम्रं तद्भस्मसंयोगात् स्वर्णतां व्रजति क्षणात् ।

उस भस्म के संयोग से ताम्र क्षणमात्र में स्वर्ण हो जाता है ।

इन्द्रवारुणिकामूलं पुष्यर्क्षे च समुद्धरेत् ॥ ६ ॥
कालत्रये गवां क्षीरैः पिष्ट्वा तद्गोलकं कृतम् ।
छायाशुष्कं च भुक्त्वा तत् पुष्टिमायाति पुरुषः ॥ ७ ॥

इन्द्रवारुणीमूल को पुष्य नक्षत्र में उखाड़ कर गोदुग्ध से पीस कर गोलक बनावें, उसे छाया में सुखाकर तीनों काल भक्षण करने से मनुष्य पुष्टि को प्राप्त करता है ॥ ६–७ ॥

इन्द्रवारुणिकामूलं त्र्यूषणं च समं हरेत् ।
पिष्ट्वा च दुग्धेन गवां पूर्ववत्कारयेद्वटीम् ॥ ८ ॥

इन्द्रवारुणी मूल और त्र्यूषण ( सोंठ, मिर्च, पीपर ) को समान मात्रा में लेकर पूर्ववत् गौ के दुग्ध में पीस कर वटी बनावें ॥ ८ ॥

वक्त्रे धृतं बुद्धिबलं वीर्यस्तम्भं करोति च ।

इस वटी को मुख में धारण करने से बुद्धि-बल बढ़ता है, वीर्यस्तम्भ होता है ।

इन्द्रवारुणिकायास्तु फलं संगृह्य तत्र च ॥ ९ ॥
मरिचानि विभिद्यान्तर्निक्षिपेतच्च लेपयेत् ।
कल्केनास्यैव मूलस्य शोषयेदातपे ततः ॥ १० ॥
उष्णोदकेन तद् भुक्त्वा सम्यग्रेचनमृच्छति ।

इन्द्रवारुणी के फल को ग्रहण करके, उसका मर्दन करके, उसमें मरिच भरके ऊपर से इसी के मूल के कल्क का लेप करके धूप में सुखावें, पुनः गरम जल से इसका सेवन करने से अच्छी प्रकार से रेचन होता है ॥ ९–१० ॥

मन्त्रः—आं नमः सर्वार्थसाधकाय स्वाहा । ॐ आं नमः सर्वसत्त्वानामर्थसाधिनि हुं फट् स्वाहा ।

—०—



## अथ भृङ्गराजकल्पः

काले शरदि संग्राह्यं भृङ्गराजं समूलकम् ।
आतपे शोषयित्वा च सूक्ष्मचूर्णं तु कारयेत् ॥ १ ॥

शरत्काल में मूल के सहित भृङ्गराज को ग्रहण करे । धूप में सुखाकर महीन चूर्ण बना लेवें ॥ १ ॥

आरनाले समालोड्य सेवयेद्दिवसे शुभे ।
विडालपदमात्रं तु भक्षयेदखिलं हितम् ॥ २ ॥

अमरनाल (काञ्जी) में आलोडित करके शुभदिन में विडालपद ( १ कर्ष ) के बराबर मात्रा सकल कल्याण की कामना से भक्षण करे ॥ २ ॥

मासमात्रप्रयोगेण विनश्यन्त्यखिलामयाः ।
मासद्वयप्रयोगेण बलवान् रोगवर्जितः ॥ ३ ॥

एक मास प्रयोग से सब रोग नष्ट होते हैं । दो मास प्रयोग से मनुष्य बलवान् और रोगरहित होता है ॥ ३ ॥

भृङ्गराजरसे चूर्णं त्रिफलाया विनिक्षिपेत् ।
पक्षत्रयप्रयोगेण पलितैरपि मुच्यते ॥ ४ ॥

भृङ्गराज के रस में त्रिफला का चूर्ण मिलावै, इसका तीन पक्ष ( $1\frac{1}{2}$ मास ) प्रयोग करने से पलित ( श्वेतकेशता ) से मुक्ति मिलती है ॥ ४ ॥

काकमाचीरसं भृङ्गरसेन सह संपिबेत् ।
द्वादशाहाद्भवेज्जन्तुर्दृढदेहो जितेन्द्रियः ॥ ५ ॥

काकमाची का रस भृङ्गराज के रस के साथ बारह दिन तक सेवन करने से मनुष्य दृढ़ देह और जितेन्द्रिय होता है ॥ ५ ॥



## अथ त्रिफलाकल्पः

त्रिनिष्कमात्रा ह्यभया षण्णिष्कं तु बिभीतकम् ।
धात्री द्वादशनिष्का स्यात् त्रिफला सूक्ष्मचूर्णिता ॥ १ ॥

हरीतकी ३ निष्क प्रमाण में, बहेड़ा ६ निष्क प्रमाण में, आमला द्वादश ( १२ ) निष्क प्रमाण में लेकर के सूक्ष्म चूर्ण बना लेवे ॥ १ ॥

योजयेत् खदिरस्यापि विडङ्गस्य च चूर्णकम् ।
सर्वं विमर्दयेत् खल्वे भृङ्गराजभवाम्बुभिः ॥ २ ॥
तद्रसे सप्तधा भाव्यं पुनश्च···चूर्णकम् ।

इसमें खदिर और विडंग का चूर्ण मिलाकर खरल में भृङ्गराज के स्वरस (स्वरस) से सात बार भावना देकर मर्दन कर चूर्ण बना लेवें ॥ २ ॥

नियमेनास्य योगस्य मासमात्रनिषेवणात् ॥ ३ ॥
वलीपलितनिर्मुक्तो षण्मासाद् दिव्यदेहवान् ।

इस चूर्ण का नियमपूर्वक एक महीना प्रयोग करने से वली और पलित से मुक्त मनुष्य होता है । छः मास सेवन करने से दिव्यदेहधारी हो जाता है ॥३॥

इत्थं संवत्सराभ्यासाद्दीर्घं विन्दति जीवितम् ॥ ४ ॥

तथा इस प्रकार एक वर्ष प्रयोग करने से मनुष्य दीर्घ जीवन प्राप्त करता है ॥ ४ ॥

---

## अथोदकल्पः

न संपक्तिक्रियायोगो भेषजेषु च विद्यते ।
सर्वरोगविनाशाय निशान्ते तु पिबेज्जलम् ॥ १ ॥

औषधों में संपक्ति (परिपाक) क्रिया का संयोग नहीं होता है, सभी रोगों को नष्ट करने के लिए प्रातःकाल जल पान करे ॥ १ ॥

अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत् ।
वातपित्तभवान् रोगान् हन्ति कुर्यात् सुखं स्थिरम् ॥ २ ॥

सूर्योदय से पहले आठ पसर जल पीवे, यह वात-पित्त से होने वाले रोगों को नष्ट करता है तथा सुख स्थिर होता है ॥ २ ॥

प्रसृतियुगलमात्रं प्रातरुत्थाय नित्यं,
पिबति खलु नरो यो घ्राणरन्ध्रेण वारि ।
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
वलिपलितविहीनः सर्वरोगैर्विमुक्तः ॥ ३ ॥



प्रातः काल उठ कर दो पसर जल नासिका छिद्र से जो मनुष्य पान करता है वह बुद्धिमान, नेत्रों में गरुड़ के सदृश, वली और पलित से रहित सभी रोगों से मुक्त होता है ॥ ३ ॥

निशादौ च विषं वारि निशामध्ये पयः स्मृतम् ।
निशान्ते च पिबेद्वारि मातुः क्षीरमिवोत्तमम् ॥ ४ ॥

रात्रि के प्रथम प्रहर में जल विष है, मध्यरात्रि में दुग्ध सदृश होता है, प्रातः काल (सूर्योदय के पूर्व) गौ के उत्तम दूध के समान होता है ॥ ४ ॥

पिबेद्घटसहस्राणि यावन्नोदेति भास्करः ।
अस्तं गते दिवानाथे बिन्दुरेकी घटायते ॥ ५ ॥

सूर्योदय से पूर्व सहस्र घट भी जल पीवे, परन्तु सूर्योदय के समय एक बूँद भी पिया गया जल घट के समान हो जाता है ॥ ५ ॥

---

## अथ मुसलीकल्पः

नामान्यस्य प्रवक्ष्यामि यतो जानन्ति साधकाः ।
सुवर्णपुष्पी गौरी च मुसली युगपत्रिका ॥ १ ॥
नारायणी क्षीरवहा नामभिः सा शुभा मता ।
ततः कर्माणि कुर्वीत विज्ञायौषधिमुत्तमाम् ॥ २ ॥

इसके नामों का वर्णन करते हैं, जिन्हें साधक जानते हैं । सुवर्णपुष्पी, गौरी, मुसली, युगपत्रिका, नारायणी और क्षीरवहा नामों से यह शुभ औषध कही गई है ।

इस प्रकार इस उत्तम औषध को जान कर पश्चात् कार्यारम्भ करे ॥१-२॥

मुसल्याः पुष्पमाहृत्य सूक्ष्मचूर्णं च कारयेत् ।
मधुना सह भुक्तं तत् करोत्यग्नेर्बलं परम् ॥ ३ ॥

मुसली का पुष्प ग्रहण करके सूक्ष्म चूर्ण बनावै, मधु के साथ इस चूर्ण के भक्षण करने से अग्नि का बल बढ़ाती है ॥ ३ ॥

आज्येन तत्प्रयुक्तं सद् गुल्मरोगं विनाशयेत् ।

घृत के साथ प्रयोग करने से गुल्म रोग का नाश करती है ।

उष्णोदकेन युक्तं तु तदजीर्णमपोहयेत् ॥ ४ ॥

गरम जल से प्रयोग करने से अजीर्ण का नाश करती है ॥ ४ ॥

विसूचिकां विरेकानप्यधिकान् विनिवारयेत् ।

विसूचिका और अधिक विरेचन को भी रोकती है ।

गोधूमचूर्णभागौ द्वौ मूसलीचूर्णमेककम् ॥ ५ ॥
घृताक्तं मधुनाक्तं वा द्वितयं तद्भजेन्नरः ।
सप्तरात्रप्रयोगेण सर्वे यान्त्यामयाः क्षयम् ॥ ६ ॥

गोधूम ( गेहूँ ) का चूर्ण दो भाग, मुसली चूर्ण एक भाग मिला कर घृत अथवा मधु से मिला कर सात रात्रि तक प्रयोग करने से सभी रोग नष्ट होते हैं ॥ ५-६ ॥

वृश्चिकेन च संदष्टे चूर्णमस्योपयोजयेत् ।
तण्डुलस्याम्भसा शीघ्रं विषं तस्य विनश्यति ॥ ७ ॥

बिच्छूदंश में चावल के धोवन से इसका चूर्ण सेवन करने से शीघ्र ही विष नष्ट होता है ॥ ७ ॥

मनश्शिलाभस्मना च कासश्वासावपोहयेत् ।

मनःशिला-भस्म के साथ सेवन करने से कास, श्वास नष्ट होते हैं ।

विनाशयेद्गण्डमालां घृतेन पयसापि वा ॥ ८ ॥

घृत अथवा दूध के साथ सेवन करने से गण्डमाला को नष्ट करती है ॥८॥

शमयेत् कुपितं पित्तं त्रिफलाचूर्णकेन च ।
मध्वाज्याभ्यां च तच्चूर्णं पलद्वयमितं भजेत् ॥ ९ ॥
अक्षय्यमस्य सततं रेतः संजायते ध्रुवम् ।
आर्द्रकस्वरसैर्नश्येत् कुष्ठं बाधिर्यमेव च ॥ १० ॥

त्रिफला चूर्ण के साथ सेवन करने से कुपित पित्त शान्त होता है ।

दो पल परिमित उसका चूर्ण घृत और मधु से सेवन करने से निश्चित रूप से अक्षय्य वीर्य होता है ।

आर्द्रक स्वरस के साथ इसका चूर्ण सेवन से कुष्ट और बाधिर्य नष्ट होता है ॥ ९-१० ॥



जरामृती जयेत्तच्च केसरस्य रसेन हि ।

केसर के रस से इसका चूर्ण वार्धक्य और मृत्यु को नष्ट करता है ।

अपस्मारं नाशयति जम्बूफलरसैरपि ॥ ११ ॥

जामुन के फल के रस से इसका चूर्ण अपस्मार का नाश करता है ॥ ११॥

दुग्धेन भस्मकं तृष्णां काञ्जिकेन निवारयेत्

दुग्ध की भावना देकर बनायी हुई इसकी भस्म, कांजी के अनुपान से तृष्णा का निवारण करती है ।

भृङ्गराजरसैः सर्वानामयान् शमयेदिदम् ॥ १२ ॥

भृङ्गराज के रस से यह सभी रोगों को शान्त करती है ॥ १२ ॥

क्षयमौदुम्बररसैः क्षपयेत् पलितं नृणाम् ।

औदुम्बर ( गूलर ) के रस से सेवन करने से मनुष्यों का पलित विनष्ट होता है ।

वाकुचिस्वरसेनैतद् बन्ध्यात्वं च विनाशयेत् ॥ १३ ॥

वाकुची के स्वरस से बन्ध्यात्व विनष्ट होता है ॥ १३ ॥

गोमूत्रेणोपयुक्तं तत् सततं शमयेज्ज्वरम् ।
जम्बीरस्वरसेनैषा मुसली कामलापहा ॥ १४ ॥

गोमूत्र के साथ उपयोग करने से सततक ज्वर को नष्ट करती है । नीबू के स्वरस से यह मुसली, कामला ( पीलिया ) को नष्ट करती है ॥ १४ ॥

तद्रजः काञ्जिकैः पीतं सद्यः कुक्षिरुजापहम् ।

उसका चूर्ण कांजी के साथ पीने से तुरन्त उदर रोग को नष्ट करता है ।

कदलीवारिणा हन्याज्ज्वरमेषा तृतीयकम् ॥ १५ ॥

केला के रस से यह तृतीयक ज्वर को नष्ट करती है ॥ १५ ॥

अपामार्गरसेनापि निर्हरेद्वातजान् गदान् ।

अपामार्ग के रस से वातोत्थ रोगों को नष्ट करती है ।

नारिकेलाम्बुना युक्तं शिरोरोगान् निवारयेत् ॥ १६ ॥

नारिकेल के जल से पान करने से शिरोरोग नष्ट करती है ॥ १६ ॥

तिलतैलेन तच्चूर्णं हन्याच्छ्लेष्मभवान् गदान् ।

तिल-तैल से उसका चूर्ण कफ से जायमान रोगों को नष्ट करता है ।

मदनस्य रसैः पीतं पाण्डुं जयति दुस्सहम् ॥ १७ ॥

मदन के रस से पीने से दुःसह पाण्डु को नष्ट करती है ॥ १७ ॥

सूरणेनोपयुक्तं तद् गुदामयमपोहयेत् ।

सूरण के साथ उपयोग करने से गुदामार्ग के रोगों को नष्ट करती है ।

आर्द्रकस्य रसैः पीतं तच्चूर्णं शूलवेगनुत् ॥ १८ ॥

आर्द्रक-रस के साथ पीने से वह शूल के वेग को नष्ट करती है ॥ १८ ॥

कूष्माण्डफलसारेण जलोदरगदं जयेत् ।

कूष्माण्ड-फल के सार से सेवन करने से जलोदर रोग को नष्ट करती है ।

तच्चूर्णं सैन्धवोपेतं दुष्टव्रणविशोषणम् ॥ १९ ॥

सेंधा नमक के साथ उसका चूर्ण दुष्ट व्रण ( Chronic wounds ) को सुखाता है ॥ १९ ॥

जीर्णज्वरभवान् रोगान् पिप्पल्या सहितं हरेत् ।

पिप्पली के साथ सेवन करने से जीर्ण-ज्वर से अनुबद्ध रोगों को नष्ट करती है ।

लक्ष्मणामूलमुसलीकदलीकन्दजान् रसान् ॥ २० ॥
वनिता चेत् पिबेन्नित्यं बन्ध्यापि लभते सुतम् ।

लक्ष्मणा-मूल, मुसली और कदली के कन्द से उत्पन्न रस को यदि स्त्री नित्य सेवन करे तो बन्ध्या भी पुत्र प्राप्त करती है ॥ २० ॥

वाचस्पतिः स्यान्मूकोऽपि मुसलीं वचया भजन् ॥ २१ ॥

वचा के साथ मुसली का सेवन करने से मूक भी बृहस्पति के समान हो जाता है ॥ २१ ॥

सेविता भूशिरीषेण जरामरणनाशिनी ।

पृथ्वी-गत शिरीष के साथ सेवन करने से वार्धक्य और मृत्यु का नाश करती है ।

तक्रेणालोड्य संपीता पाण्डुरोगनिवारिणी ॥ २२ ॥

मट्ठा में मिलाकर पीने से पाण्डुरोग का नाश करती है ॥ २२ ॥

निर्गुंडीस्वरसैः पीता वज्रकायप्रदायिनी ।

निर्गुण्डी के रस के साथ पीने से देह को वज्र-सा दृढ़ बना देती है ।



अजामूत्रेण संपीता वलीपलितनासिनी ॥ २३ ॥

बकरी के मूत्र के साथ पीने से वली और पलित को नष्ट करती है ॥ २३ ॥

नारिकेलाम्बुना पीता मुसली विषनाशिनी ।

नारिकेल के जल से पीने से मुसली विष का नाश करती है ।

कालसर्पविषं हन्यात् पटोलेन युता यदि ॥ २४ ॥

पटोल-पत्र के साथ सेवन करने से काले नाग के विष को नष्ट करती है ॥ २४ ॥

## अथ मुण्डीकल्पः

भिक्षूत्तमाङ्गपरिकल्पितनामधेयां
तां चूर्णयेन्ननु समूलफलां च खल्वे ।
तक्रारनालमधुदुग्धघृतैः प्रयोगात्
षण्मासतः खलु नरा अजरामराः स्युः ॥ १ ॥

भिक्षु के उत्तमाङ्ग से कल्पित है नाम जिसका अर्थात् मुण्डी को मूल और फल समेत खरल में चूर्ण करे; मट्ठा, काँजी, शहद, दुग्ध और घृत से ६ मास प्रयोग करने से मनुष्य वृद्धावस्था तथा मरण से रहित होते हैं ॥ १ ॥

सुपर्णचक्षुः श्रवणे वराहो
ज्ञानेन हंसः स्वरकिन्नरश्च ।
बलेन भीमश्चलनेन वायुः
स्याद्गीष्पतेश्चापि धिया समानः ॥ २ ॥

दृष्टि में गीध, श्रवण में वराह, ज्ञान में हंस, स्वर में किन्नर, बल में भीम, गति में वायु और बुद्धि में बृहस्पति के समान मनुष्य होता है ॥ २ ॥

सुरासुरैः स्तूयमाना सा मुण्डी त्रिविधा मता ।
सिता रक्ताऽसिता चेति सत्त्वराजसतामसैः ॥ ३ ॥

देव-दानवों से वन्दित यह मुण्डी तीन प्रकार की होती है । श्वेत, रक्त और कृष्ण भेद से जो कि क्रमशः सद्गुण, रजोगुण और तमोगुण बहुल होती है ॥ ३ ॥

गुणैरेभिः कमाज्जातां कथयामास तां शिवः ।

क्रमशः इन गुणों से युक्त मुण्डी को शिवजी ने कहा है ।

शुक्लपक्षेऽथ पञ्चम्यां पौर्णम्यां च समाहितः ॥ ४ ॥
रेवतीरोहिणीपुष्यश्रवणेषु द्विजोत्तमैः ।
अभ्यर्च्य गन्धपुष्पाद्यैर्ग्रहीतव्या समूलतः ॥ ५ ॥

शुक्लपक्ष की पंचमी अथवा पूर्णिमा तिथि को एकाग्र होकर रेवती, रोहिणी, पुष्य और श्रवण नक्षत्रों में ब्राह्मण द्वारा गन्ध-पुष्पादि से पूजा कराकर मूल सहित ग्रहण करे ॥ ४–५ ॥

तच्चूर्णसेवनात् स्याच्च शारीरं बलमुत्तमम् ।
छायाशुष्कं तु तच्चूर्णं कर्षं गोपयसा सह ॥ ६ ॥
भोजयेच्चतुरो मासान् दीर्घमायुरवाप्नुयात्

उसके चूर्ण के सेवन करने से शारीरिक-बल उत्तम होता है, छाया में सुखाया हुआ उसका चूर्ण एक कर्ष प्रमाण में गोदुग्ध के साथ चार मास तक सेवन करने से दीर्घ आयु प्राप्त करता है ॥ ६ ॥

ॐ नमो भगवतेऽमृतोद्भवायामृतं कुरु स्वाहा ।

ॐ नमो भगवतेऽमृतोद्भवायामृतं कुरु स्वाहा ।



## अथ चित्रककल्पः

अथातः संप्रवक्ष्यामि चित्रकं कल्पमुत्तमम् ।
ग्रामान्ते वा श्मशाने वा वाल्मीके वा चतुष्पथे ॥ १ ॥
गृहस्यातिसमीपे वा चित्रकं परिवर्जयेत् ।
सूचीपत्रमुखं श्रेष्ठं तथा मण्डलपत्रकम् ॥ २ ॥
उभौ तौ चित्रकौ ग्राह्यौ सूचीमण्डलपत्रकौ ।
कार्तिके मार्गशीर्षे वा चित्रकं चोद्धरेद् बुधः ॥ ३ ॥

अब उत्तम चित्रक कल्प का वर्णन करते हैं । ग्राम के परिसर में, श्मशान में, वल्मीक में, चतुष्पथ में और घर के अति समीप में स्थित चित्रक का ग्रहण न करे ।



सूची-पत्र मुख तथा मण्डलपत्रक नामक दो प्रकार के चित्रक श्रेष्ठ हैं अत एव ग्राह्य हैं ।

कार्तिक अथवा मार्गशीर्ष ( अगहन ) में चित्रक को उखाड़े ॥ १–३ ॥

तस्य स्वरसकं रात्रौ हिमे संस्थाप्य चाहरेत् ।
द्वित्रिमासप्रयोगेण दृढकायो जितेन्द्रियः ॥ ४ ॥

उसका स्वरस रात में ओस में रखकर निकाले और उसके दो-तीन मास के प्रयोग से दृढ़ शरीरवाला और इन्द्रियों को वश में करने वाला मनुष्य होता है ॥ ४ ॥

चित्रकं मासमेकं तु तक्रेण सह यः पिबेत् ।
नश्यन्ति व्याधयः सर्वे कामदेवोपमो भवेत् ॥ ५ ॥

एक मास तक मट्ठा के साथ चित्रक का जो सेवन करता है उसकी व्याधियाँ नष्ट होती हैं और वह कामदेव के सदृश हो जाता है ॥ ५ ॥

क्षीरेण मासमेकं तु चित्रकं भक्षयेन्नरः ।
वज्रदेहो महाकायो महाबलपराक्रमः ॥ ६ ॥

दूध के साथ एक मास तक जो मनुष्य चित्रक का भक्षण करता है वह वज्र के समान देहधारी, अति विशाल शरीर वाला और अधिक बल और पराक्रम से संपन्न होता है ॥ ६ ॥

कटुत्रयेण संयुक्तो घृतेन मधुनापि वा ।
चित्रकं भक्षयेत् प्राज्ञो बिडालपदमात्रया ॥ ७ ॥
षण्मासयोगतो यान्ति वलयः पलितानि च ।
पाण्डुरोगमपस्मारं जलोदरभगन्दरौ ॥ ८ ॥

कटुत्रय ( सोंठ, मिर्च और पीपर ) से युक्त चित्रक को घृत और मधु से जो बुद्धिमान् मनुष्य विडाल पद (१ कर्ष) प्रमाण से भक्षण करता है, ६ मास प्रयोग से उसके वली, पलित, पाण्डु रोग, अपस्मार, जलोदर और भगन्दर नष्ट होते हैं ॥ ७–८ ॥

कृच्छ्रौ तु मेहकुष्ठौ च हन्ति वह्निर्निषेवितः ।

सेवन किया हुआ वह्नि ( चित्रक ) भयंकर प्रमेह और कुष्ठ रोग को नष्ट करता है ।

चित्रकं मासमेकं तु गोमूत्रेण नरः पिबेत् ॥ ९ ॥

चित्रक का एक मास तक गोमूत्र से जो मनुष्य पान करता है उसके सभी रोग शान्त होते हैं और कान्ति बढ़ती है ॥ ९ ॥

सर्वे रोगाः प्रशाम्यन्ति कान्तिश्च नितरां भवेत् ।
चित्रकं मासमेकं तु मधुना सह यः पिबेत् ॥ १० ॥
मेधावी बलसंपन्नस्तेजस्वी प्रियदर्शनः ।
जीवेद्वर्षशतं सोऽयं वलीपलितवर्जितः ॥ ११ ॥

एक मास तक चित्रक का मधु के साथ जो सेवन करता है वह मेधा-संपन्न, बलसंपन्न, तेज-संपन्न और प्रियदर्शन हो कर वली, पलित से रहित सौ वर्ष तक जीवित रहता है ॥ १०–११ ॥

चित्रकं क्षीरमधुनोर्मुष्टिश्चूर्णाज्ययोरपि ।
रसायनमहोरात्रं स्थापयित्वाऽथ पूजयेत् ॥ १२ ॥

चित्रक क्षीर और मधु के साथ और मुष्टि ( कुचिला ) चित्रक के चूर्ण और घृत के साथ सेवन करने योग्य रसायन है, इसे दिन रात रखकर पूजन करे ॥ १२ ॥

रक्ताम्बरधरो मौनी रक्तगन्धानुलेपनः ।
रक्तमाल्यानुरक्तोऽसौ बलिं दद्याद्विचक्षणः ॥ १३ ॥

मौन होकर, रक्तवस्त्र धारण करके तथा लाल चन्दन का लेप लगा कर तथा रक्तवर्ण की माला धारण करके विद्वान् पुरुष बलि देवे ॥ १३ ॥

कृष्णाष्टम्यां चतुर्दश्यां पञ्चम्यां श्रवणर्क्षके ।
चन्द्रताराबले चैव मन्त्रमेतज्जपेन्नरः ॥ १४ ॥

कृष्णपक्ष की अष्टमी, चतुर्दशी या पंचमी को श्रवण नक्षत्र में चन्द्रमा और ताराओं के समुचित बली होने पर इस मन्त्र का जप करे ॥ १४ ॥

ॐ चण्डि चित्राय स्वाहा ।
अनेनैव तु मन्त्रेण गन्धमाल्यानुलेपनम् ।
बलिं दद्यात् पुनर्मन्त्रमेतदुच्चारयेद् बुधः ॥ १५ ॥

ॐ सत्यवति महौषधि मा चलः । समयमन्त्रः–समय हुं फट स्वाहा ।



ॐ चण्डि···इसी मंत्र से गन्ध माला का अनुलेपन करे तथा बलि देवे और पुनः ॐ सत्यवति···इसी मंत्र का उच्चारण करे ॥ १५ ॥

समूलमेतदुत्पाट्य छायाशुष्कं तु कारयेत् ।
सूक्ष्मचूर्णं ततः कृत्वा घृतेन मधुनापि वा ॥ १६ ॥
कटुत्रयसमायुक्तं बिडालपदमात्रकम् ।
सप्ताहं भक्षयेत् प्रातः क्षीरसेवी जितेन्द्रियः ॥ १७ ॥

जड़ सहित इसे उखाड़ कर छाया में सुखा लेवे और महीन चूर्ण बनाकर घृत और मधु से त्रिकटु से युक्त विडाल पद ( कर्ष ) प्रमाण में एक सप्ताह तक प्रातःकाल भक्षण करे तथा केवल दुग्धमात्र आहार करे एवं इन्द्रियों को वश में रखे ॥ १६–१७ ॥

दीर्घमारोग्यवान् जीवेद्वलीपलितवर्जितः ।

तो वह आरोग्य-शाली, वली और पलित से रहित दीर्घकाल तक जीवित रहता है ।

संवत्सरप्रयोगेण शतमायुरवाप्नुयात् ॥ १८ ॥

एक वर्ष प्रयोग से सौ वर्ष की आयु प्राप्त होती है ॥ १८ ॥

## अथ मण्डूककल्पः

महानद्यां समुद्रे वा देवखाते महाह्रदे ।
अत्यगाधे तले यस्तु मण्डूको निवसेत् स तु ॥ १ ॥

महानदी, समुद्र, देवखात महाह्रद में, अगाध जल में जो मण्डूक ( Frog ) रहता है ॥ १ ॥

अतिस्थूलः स्वर्णवर्णो दीर्घजीवी बिलेशयः ।

वह बहुत मोटा, स्वर्ण-वर्ण का, दीर्घकाल तक जीवित रहनेवाला और बिलेशय ( बिल में रहने वाला ) होता है ।

शरत्काले च निर्गत्य वसेदन्यत्र सर्वदा ॥ २ ॥

वह हमेशा शरदृतु में निकल कर अन्यत्र रहता है ॥ २ ॥

धातुः कोऽपि भवेदस्य मस्तके रत्नसन्निभः ।
तं च संगृह्य शिरसस्तस्य यत्नेन मानवः ॥ ३ ॥
धारयेत् स्वकरे यावत्तावत्कालं स जीवति ।
तत्स्पृष्टोदकसंसेकाद् नश्यन्ति गरलानि च ॥ ४ ॥

इसके मस्तक में रत्न के सदृश कोई चीज रहती है । उसके शिर से उस चीज को यत्नपूर्वक ग्रहण करके जब तक अपने हाथ में धारण करता है तब तक वह जीवित रहता है ।

उससे स्पर्श किये हुए जल के सेक से विष नष्ट होते हैं ॥ ३-४ ॥

वातगुल्मोदरावर्तनेत्रशूलादिका रुजः ।
नश्यन्ति स्पर्शमात्रेण सतैलाभ्यङ्गतोऽपि वा ॥ ५ ॥

वातगुल्म, उदावर्त और नेत्रशूल आदि रोग उसके स्पर्शमात्र से नष्ट हो जाते हैं अथवा तैल का मर्दन करने से ( नष्ट होते हैं ) ॥ ५ ॥

## अथ श्रीफलकल्पः

कृष्णाष्टम्यां शुचिर्भूत्वा बिल्ववृक्षं निमन्त्रयेत् ।
माधवे ज्येष्ठमासे वा फलाद्बीजं समाहरेत् ॥ १ ॥

कृष्ण पक्ष की अष्टमी तिथि को बिल्व वृक्ष का निमंत्रण करे । फिर वैशाख अथवा जेष्ठ मास में फल से बीज का ग्रहण करे ॥ १ ॥

बिल्वबीजानि संगृह्य सूक्ष्मचूर्णं च कारयेत् ।
त्रिफलाक्वाथतोयेन सप्तवारं विभावयेत् ॥ २ ॥

बिल्व-बीज को ग्रहण करके महीन चूर्ण बना लेवें तब त्रिफला के क्वाथ ( जल ) से सात बार भावित करे ॥ २ ॥

ततो यन्त्रेण निष्पीड्य तैलं ग्राह्यं च यत्नतः ।
स्निग्धभाण्डे विनिक्षिप्य भूमौ तं च निधापयेत् ॥ ३ ॥

बाद में यंत्र ( कोल्हू ) में निचोड़ कर यत्नपूर्वक तैल निकाले और उसे चिकने बर्तन में रख कर भूमि में गाड़ देवे ॥ ३ ॥



मासात्परं तमुद्धृत्य रक्षां कुर्याद्विधानतः ।

एक मास के बाद उसे उखाड़कर विधिपूर्वक रक्षा करे ।

विरेकवमने कृत्वा शुद्धकोष्ठः शुभे दिने ॥ ४ ॥
कृष्णाष्टम्यां चतुर्दश्यां पुष्यर्क्षेऽपि च बुद्धिमान् ।
निर्वातमन्दिरे तैलं कर्षमात्रं पिबेन्नरः ॥ ५ ॥

शुभ दिन में कृष्णपक्ष की अष्टमी, चतुर्दशी और पुण्यकारी नक्षत्र में बुद्धिमान् मनुष्य विरेचन और वमन से शुद्ध-कोष्ठ होकर निर्वात गृह में एक कर्ष प्रमाण में पान करें ॥ ४-५ ॥

मात्रातिक्रमतो मूर्च्छा भ्रमो दाहस्तृषापि च ।
कण्ठोष्ठयोः शुष्कता च भवेयुर्भृशदुःखदा ॥ ६ ॥

अधिक मात्रा होने पर मूर्च्छा, भ्रम, दाह, तृषा ( प्यास ), गला और ओठों का सूखना आदि अधिक दुःख देने वाले उपद्रव होते हैं ॥ ६ ॥

कपिलाक्षीरमासिच्य गण्डूषं कारयेत्तदा ।

ऐसी स्थिति में कपिला गौ के दूध से सिंचन कर गण्डूष धारण करे ।

जीर्णान्ते कपिलाक्षीरं षष्टिकान्नं च भोजयेत् ॥ ७ ॥

जीर्ण होने पर कपिला गौ के दुध से षष्टिक ( साठी ) धान का चावल भोजन करे ॥ ७ ॥

तैलस्य सेवनादस्य व्याधिराधिश्च नश्यतः ।
प्रायः सर्वे व्याधयश्च विनश्यन्त्यस्य पानतः ॥ ८ ॥

इस तैल के सेवन करने से आधि-व्याधि नष्ट होती है । प्रायः सभी व्याधियाँ इसके पान से नष्ट हो जाती हैं ॥ ८ ॥

श्रुतिज्ञः सुभगः श्रीमान् कर्णिकारसमद्युतिः ।
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः ॥ ९ ॥

शास्त्रवेत्ता, सौभाग्यशाली, कान्तिमान्, कर्णिकार (कनक चम्पा) के कुड्मल के समान कान्तियुक्त और वली-पलित से रहित मनुष्य सौ वर्ष तक जीवित रहता है ॥ ९ ॥

सप्तभिर्मन्त्रयित्वा तु भिषग्भिर्व्याधितो नरः ।
पश्चात्तैलमिदं तीव्रवीर्यं मानेन संपिबेत् ॥ १० ॥

वैद्यों से सातबार अभिमंत्रित कराकर रोगी मनुष्य तत्काल इस तीव्र वीर्य तैल का परिमाण में पान करे ॥ १० ॥

ॐ नमो वीरजननि स्वाहा-इति मन्त्रं जपेत् ॥

उक्त मंत्र का जाप करे।

## अथ लाङ्गलीकल्पः

अथातः संप्रवक्ष्यामि चोषधीकल्पमुत्तमम्।
लाङ्गलीत्योषधिः काचिद्विख्याता धरणीतले ॥ १ ॥

आगे उत्तम औषधि का कल्प बतलाते हैं। लांगली नाम की कोई औषधि पृथ्वीतल में विख्यात है ॥ १ ॥

तस्या मूलं तु संगृह्य गन्धकं स तथैव हि।
रसेन सह संमर्द्य ताम्रपत्राणि लेपयेत् ॥ २ ॥

उसका मूल लेकर तथा गन्धक लेकर इस ( पारद ) के साथ मर्दित कर ताम्रपत्रों को लिप्त करे ॥ २ ॥

दद्याद्गजपुटं स्वर्णवर्णत्वं यान्ति तानि च।

फिर गजपुट में फूँक देवे तो स्वर्णवर्ण के वे ( ताम्रपत्र ) हो जाते हैं।

सुखप्रसवदं तच्च सूतिकारोगशान्तिदम् ॥ ३ ॥

यह सुख से प्रसव कराने वाला होता है तथा सूतिका रोग को शान्ति देता है ॥ ३ ॥

जलेन लाङ्गलीकन्दं पिष्ट्वा हस्ते प्रलेपयेत्।
वज्रतुल्यबलं तस्य करस्याविर्भवेत्ततः ॥ ४ ॥

जल से लांगली-कन्द को पीसकर हाथों में प्रलेप करे तो उस हाथ का वज्र के समान बल प्रकट होता है ॥ ४ ॥

पुरा ह्यमीषां योगानां मद्रराजमयोदितम्।

पहले ये योग मद्रराज मय द्वारा वर्णित थे।

अष्टोत्तरशतं जप्त्वा सिद्धिमायाति चोत्तमाम् ॥ ५ ॥

१०८ बार मंत्र-जप करने के बाद उत्तम सिद्धि प्राप्त होती है ॥ ५ ॥



ॐ नमो भगवते डामरेश्वराय स्वाहा ठः ठः ॥
तत्कालोत्पाटितं तस्याः कन्दमार्द्रं विमर्दयेत्।
पञ्च कर्षास्ततो भुक्त्वा शरीरे च विलेपयेत् ॥ ६ ॥

ॐ नमो ···इस मन्त्र के उच्चारणकाल में उखाड़े गये उसके आर्द्र कन्द को विमर्दित कर पाँच कर्ष परिमाण में खाकर शरीर में लेप करे ॥ ६ ॥

अथ चाभिमुखं गच्छेद्युद्धस्य जयमाप्नुयात्।

और युद्ध में जावे तो विजय होती है।

लाङ्गलीसैन्धवाभ्यां च गन्धकेन च लेपयेत् ॥ ७ ॥
ताम्रपत्राणि चूर्णानि विकिरेदयसस्ततः।
अथ संशोष्य लाङ्गल्याः कल्केनोपरि लेपयेत् ॥ ८ ॥
आतपे शोषयित्वात्र दहेद् गजपुटेन च।
तानि भस्मत्वमायान्ति ताम्रपत्राणि तत्क्षणात् ॥ ९ ॥

लांगली, सैन्धव और गन्धक से ताम्रपत्रों को लिप्त कर ऊपर से लौह के चूर्ण को छिड़के, बाद में सुखाकर ऊपर से लांगली के कल्क लेप करके पुनः घाम में सुखाकर गजपुट में फूक देवें, इससे ताम्रपत्र तुरंत भस्म हो जाते हैं ॥ ७-९ ॥

भस्मेदं भस्मसात्कुर्याद्विषजानामयान् ध्रुवम्।
दद्याद्बलं दीर्घमायुः प्रजावृद्धिं सुसेवनात् ॥ १० ॥

यह भस्म विष से उत्पन्न रोगों को निश्चित रूप से भस्म कर देती है और अच्छी प्रकार सेवन करने से बल, दीर्घायु और प्रजा वृद्धि को देती है ॥ १० ॥

## अथामलकीकल्पः

पञ्चाङ्गानामामलक्याः क्वाथं मण्डलमापिबेत्।
अष्टादशविधानां च कुष्ठानां प्रशमो भवेत् ॥ १ ॥

आमलकी के पंचांग का क्वाथ मण्डल पीने से अठारह प्रकार के कुष्ठों की शान्ति होती है ॥ १ ॥

आमलक्याः समादाय मूलं संशोष्य चूर्णयेत् ।

आमलकी के मूल को सम्यक् प्रकार से ग्रहण करके सुखाकर चूर्ण बना लेवे ।

तन्मूलस्य त्वचो वापि चूर्णं सम्यक् तथाचरेत् ॥ २ ॥

अथवा उसके मूल की छाल को ही सुखाकर चूर्ण बनावै ॥ २ ॥

मधुना चोपभुक्तं सत् प्रदरं नाशयेत् स्त्रियाम् ।

मधु के साथ इसका उपयोग करने से स्त्रियों के प्रदर का नाश करता है ।

तच्चूर्णं मधुना चैव घृतेन च समाहरेत् ॥ ३ ॥
औदुम्बरफलाकारमात्रया प्रत्यहं त्रिधा ।
मासैः षड्भिर्महाकुष्ठमसाध्यं विजयेदिदम् ॥ ४ ॥

उस चूर्ण को घृत और मधु में मिश्रित कर गूलर के फल के प्रमाण से प्रतिदिन तीन बार भक्षण करे, इस प्रकार यह ६ मास से असाध्य महाकुष्ठ को भी नष्ट करता है ॥ ३-४ ॥

नखाः केशाश्च दन्ताश्च नव्याः स्युः पुनरेव च ।

नख, दन्त और केश पुनः नये हो जाते हैं ।

तैलेन सह तच्चूर्णं विपाच्याभ्यङ्गमाचरेत् ।
कण्डूं विचर्चिकां पामां मण्डलं च प्रशामयेत् ॥ ५ ॥

तैल के साथ उसका चूर्ण पकाकर मालिश करे, यह कण्डू, विचर्चिका पामा और मण्डल ( कुष्ट ) को शान्त करता है ॥ ५ ॥

गोमूत्रेण च तच्चूर्णं नित्यज्वरमपोहयेत् ।
तदेव च सितादुग्धैः कारयेदधिकं बलम् ॥ ६ ॥

गोमूत्र के साथ यह चूर्ण सततक ज्वर को नष्ट करता है तथा वही ( चूर्ण ) मिश्री और दूध से अधिक बल ( वृद्धि ) करता है ॥ ६ ॥

पुनर्नवारसेनैतद्वातव्याधिं विनाशयेत् ।
कुष्माण्डस्वरसेनैतदुदरं च निवारयेत् ॥ ७ ॥

पुनर्नवा के रस से यह वातव्याधि को नष्ट करता है और कुष्माण्ड ( कोहड़ा ) के स्वरस से यह उदर ( रोग ) को नष्ट करता है ॥ ७ ॥



काथेन त्रिफलायाश्च रक्तपित्तं हरेत्तथा ।
वचया सह तद् भुक्तं कुर्याद् बलमनुत्तमम् ॥ ८ ॥

त्रिफला के क्वाथ से रक्तपित्त को नष्ट करता है और वचा के साथ भक्षण करने से उत्तम बल करता है ॥ ८ ॥

## अथ श्वेतगुञ्जाकल्पः

मूलं तु श्वेतगुञ्जाया ऋक्षे उत्तरभाद्रके ।
उत्तराभिमुखं ग्राह्यमाहरेच्च रसं ततः ॥ १ ॥

श्वेत गुंजा के मूल को उत्तरा भाद्रपदा नक्षत्र में उत्तर मुख होकर ग्रहण करे तथा उसका रस निकाले ॥ १ ॥

कुर्याच्च भावनां तत्र सितसूत्रचयस्य च ।
एतैश्च कृत्वा सूत्रैस्तु वर्तिमुज्ज्वालयेच्च ताम् ॥ २ ॥

उस रस से सफेद सूतों को भावित कर बत्ती बनाकर जलावै ॥ २ ॥

संगृह्य कज्जलीं तस्य गव्येनाज्येन चाञ्जयेत् ।
आमयाश्चाक्षुषाः सर्वे शमं यान्ति न संशयः ॥ ३ ॥

उसकी कज्जली को ग्रहण करके गौ के घृत से अंजन करे, इससे नेत्रसंबन्धी सभी रोग शान्त होते हैं, इसमें सन्देह नहीं है ॥ ३ ॥

श्वेतगुञ्जारसैः सम्यक् सर्वाण्यङ्गानि लेपयेत् ।
एवं सप्ताचरेन्मासान् गात्रं भवति वज्रवत् ॥ ४ ॥

सफेद गुंजा के रस से सभी शरीर को अच्छी प्रकार से लेप करे और इस प्रकार सात महीना तक करने से शरीर वज्र के समान होता है ॥ ४ ॥

अङ्गारराशिमध्येऽपि स्थितो दह्येत नाग्निना ॥ ५ ॥

और अग्नि-समूह में भी नहीं जलता है ॥ ५ ॥

मन्त्रः—ॐ वज्रकिरणे अघृतं कुरु स्वाहा ।
ॐ नमो महामाये वह्निं रक्ष स्वाहा ।
समाहृत्य श्वेतगुञ्जामूलं तच्च विमर्दयेत् ।
ततः कुसुम्भस्य रसैः सह तत् पेषयेन्मृदु ॥ ६ ॥

तेनैव रञ्जयेद्वस्त्रं त्रिंशद्वारं मुहुर्मुहुः ।

श्वेत गुंजा के मूल को ग्रहण करके मर्दन करे, बाद में कुसुम्भ ( बरें ) के रस से उसे धीरे से पीस लेवे, उतसे तीस बार पुनः पुनः वस्त्र को रंजित करे ॥ ६ ॥

धृत्वाथ तज्जलं गाहेदगाधमपि मानवः ॥ ७ ॥

......इस वस्त्र को धारण करने से मनुष्य अगाध जल की भी थाह लगा लेता है ॥ ७ ॥

मन्त्रमेतज्जपन् कुर्याज्जलस्तम्भं स्वशक्तितः ।
ॐ नमो भगवते रुद्राय जलं स्तम्भय ठः ठः पारः ।

ॐ नमो इस मंत्र का जप करते हुए मनुष्य अपनी शक्ति से जल स्तम्भ करता है ।

पुष्यर्क्षे श्वेतगुञ्जाया विधिना मूलमुद्धरेत् ।
महिषाक्ष्या रसैः सम्यक् तत् पिष्ट्वा मधुना सह ॥ ८ ॥
अञ्जयेच्चाक्षियुगलं दिनान्ते च शिवालये ।
मासैः षड्भिर्निधिं पश्येत् साधकोऽपि भवेदसौ ॥ ९ ॥

पुष्य नक्षत्र में श्वेत गुंजा के मूल को विधिपूर्वक उखाड़ कर महिषाक्षी के रस से अच्छी प्रकार से पीस कर मधु के साथ सायंकाल शिवालय में दोनों आखों में ६ मास तक अंजन करने से मनुष्य निधि ( खजाना ) देखता है, वह साधक भी होता है ॥ ८-९ ॥

## अथ मण्डूकब्राह्मीकल्पः

ब्राह्मीं मण्डूकपूर्वां तु शुक्लपक्षे समुद्धरेत् ।
पुष्यर्क्षे च समूलां तां समुत्पाट्यविचूर्णयेत् ॥ १ ॥

मण्डूक ब्राह्मी को शुक्लपक्ष के पुष्य नक्षत्र में मूलसहित उखाड़ कर चूर्ण बना लेवै ॥ १ ॥

विडालपदमात्रं तु पिबेद् गोपयसा सह ।
सप्तरात्रप्रयोगेण कुक्षिरोगो विनश्यति ॥ २ ॥



विडालपद ( एक कर्ष ) प्रमाण में गोदुग्ध के साथ सात रात तक पान करने से कुक्षि ( उदर ) रोग विनष्ट होते हैं ॥ २ ॥

द्विसप्ताहप्रयोगेण दृढदेहो भवेन्नरः ।

दो सप्ताह के प्रयोग से मनुष्य दृढ़ देहधारी होता है ।

क्षीरेण पानतो मासात् सर्वे नश्यन्ति चामयाः ॥ ३ ॥

एक मास तक दुग्ध से पान करने से सभी रोग नष्ट होते हैं ॥ ३ ॥

मासद्वयप्रयोगेण निधानानि तु पश्यति ।

दो मास के प्रयोग से भूमिस्थ खजानों को देखता है ।

अदृश्यश्च त्रिभिर्मासैर्भवेदेव न संशय ॥ ४ ॥

और तीन मास के प्रयोग से अदृश्य होता है, इसमें सन्देह नहीं है ॥४॥

चतुर्मासैश्च पश्येत् स विमानानि सुपर्वणाम् ।

चार मास के प्रयोग से देवताओं के विमान को देखता है ।

मासषट्कप्रयोगेण खेचरत्वमवाप्नुयात् ॥ ५ ॥

तथा छः मास के प्रयोग से स्वयं आकाश-गमन शक्ति ( देवत्व ) प्राप्त करता है ॥ ५ ॥

संवत्सरप्रयोगेण द्वितीय इव शङ्करः ।
भवेत् कालत्रयं चापि जानाति भुवनत्रयम् ॥ ६ ॥

एक वर्ष के प्रयोग करगे से द्वितीय शंकर के समान हो जाता है तथा तीनों काल और तीनों लोकों को जानता है ॥ ६ ॥

निर्यान्त्यस्य प्रयोगेण यक्षरक्षांसि दूरतः ।

इसके प्रयोग से यक्ष और राक्षस दूर से ही भाग जाते हैं ।

अनेनैव प्रयोगेण बन्ध्या पुत्रवती भवेत् ॥ ७ ॥

और इसी प्रयोग से बन्ध्या भी पुत्रवती होती है ॥ ७ ॥

सम्पक्वमूलं सङ्गृह्य मध्वाज्याभ्यां च सेवयेत् ।
जलोदरं तथा वातगुल्मशूलं विनश्यति ॥ ८ ॥

पके मूल वाली मण्डूक ब्राह्मी को लेकर मधु और घृत से सेवन करे तो जलोदर, वातगुल्म का शूल नष्ट होता है ॥ ८ ॥

ॐ अमृतोद्भवायामृतं कुरु स्वाहा—अनेन मन्त्रेणाभिमन्त्र्य भक्षयेत् ।

ॐ अमृ० इस मंत्र से अभिमंत्रित लरके भक्षण करे ।

## अथ वन्दाकल्पः

संगृह्य द्रुमवन्दाकं संयोज्य स्वर्णपत्रकैः ।
हस्ते कण्ठे च कट्यां च धारयेद् रोगशान्तये ॥ १ ॥

वन्दाक वृक्ष को ग्रहण करके, स्वर्ण-पत्रक से संयुक्त कर हाथ, कण्ड और कमर में रोग शान्ति के लिए धारण करे ॥ १ ॥

विशाखायां समुद्धृत्य वन्दाकं राजवृक्षकम् ।
स्थापयेद् गृहमध्ये च नाप्नुयादग्निजं भयम् ॥ १ ॥

विशाखा में राजवृक्ष वन्दाक को उखाड़ कर घर के मध्य में रखने से अग्नि से भय नहीं होता है ॥ २ ॥

रोहिण्यां वटवन्दाकं कटिस्थं वीर्यवर्धनम् ।

रोहिणी नक्षत्र में उखाड़ा गया वटवृक्ष से संबन्धित वन्दाक कमर में धारण करने से वीर्य-वृद्धि करता है ।

अश्वत्थभववन्दाकं रेवत्यां जीववर्धनम् ॥ ३ ॥

रेवती नक्षत्र में अश्वत्थ ( पीपल ) पर होने वाला वन्दाक जीव वृद्धि करता है ॥ ३ ॥

निर्गुण्डीभववन्दाकं भरण्यामाहरेत् सुधीः ।

निर्गुण्डी पर होने वाले वन्दाक को भरणी नक्षत्र में विद्वान् पुरुष ग्रहण करे ।

क्षीरेण पीतं तत् कुर्याद्वीर्यवृद्धिं मनोबलम् ॥ ४ ॥

वह दुग्ध के साथ पान करने से वीर्य-वृद्धि और मनोबल को करता है ॥४॥

जम्बूवन्दाकजं चूर्णं तक्रपीतं विषं हरेत् ।

जामुन के ऊपर होने वाले वन्दाक का चूर्ण मट्ठा से पीने से विष को नष्ट करता है ।



पुष्ये तिन्दुकवन्दाकमादाय वदने कृतम् ॥ ५ ॥
सर्पवृश्चिकलूतादिभवं हन्ति विषं ध्रुवम् ।

पुष्य नक्षत्र में तिन्दुक ( तेनू ) पर होने वाले वन्दाक को ग्रहण करके मुख में रखने से सर्प, वृश्चिक (बिच्छू), लूता आदि का विष नष्ट होता है ॥५॥

ब्रह्मवृक्षस्य वन्दाकं स्वात्यां क्षीरेण सेवितम् ॥ ६ ॥
सत्यं संजनयेदायुरधिकं ज्ञानमेव च ।

निश्चित रूप से स्वाती नक्षत्र में ब्रह्मवृक्ष का वन्दाक ग्रहण कर दुग्ध से सेवन करने से आयु और ज्ञान की वृद्धि करता है, यह सत्य है ॥ ६ ॥

औदुम्बरस्य वन्दाकमेवं कुर्याद् दृढं बलम् ॥ ७ ॥

इसी प्रकार गूलर वृक्ष का वन्दाक दृढ़ बल करता है ॥ ७ ॥

## अथ वाकुचीकल्पः

सोमराजीभवं बीजं निस्तुषं ननु कारयेत् ।
तस्य कुर्यात्ततश्चूर्णं पलमात्रं पिबेत्ततः ॥ १ ॥
उष्णोदकेन त्रिदिनान्यथ मूत्रेण तद् गवाम् ।
पिबेत्पञ्चदिनान्यासां क्षीरेणैकादशाहरेत् ॥ २ ॥
यावत्पञ्चदशाहोऽथ घृतेन सह सेवयेत् ।
मासं रसेनामलक्याः क्रमेणैवं भजेदिदम् ॥ ३ ॥

सोमराजी ( वाकुची ) के बीजों को छिलका रहित करके उसका चूर्ण बनावें और एक पल प्रमाण में गरम जल के साथ तीन दिन तक सेवन करे, गोमूत्र से पाच दिन, दुग्ध से इग्यारह दिन और घृत से पन्द्रह दिन तक सेवन करे और एक मास पर्यन्त आमला के रस से क्रमशः सेवन करे ॥१-३॥

आहारः क्षीरसंयुक्तः सर्वदा जनयेत् सुखम् ।
वलीपलितनिर्मुक्तो दीर्घायुर्जायते नरः ॥ ४ ॥

तथा दुग्ध से युक्त आहार करे, यह सर्वदा सुख को देने वाला है, वली और पलित से रहित मनुष्य दीर्घायु होता है ॥ ४ ॥

वाकुच्याः किल पञ्चाङ्गं काञ्जिकेन विमर्दयेत् ।
तत्कल्कमध्ये वङ्गं तु सेचयेत् सततशो द्रुतम् ॥ ५ ॥

वाकुची के पंचांग को कांची से मर्दन करे, उसके कल्क के मध्य में सात बार पिघलाया हुआ वंग सिंचित करे ॥ ५ ॥

सोमराज्याश्च तैलेन तथा गन्धकपारदौ ।
सप्तमांसेन वङ्गस्य दत्वा चोपरि नागकम् ॥ ६ ॥
द्वादशांशेन तैः साकं संयोज्याथ च पेषयेत् ।
एवं कृते स्वयं वङ्गस्तारत्वमधिगच्छति ॥ ७ ॥

सोमराजी ( वाकुची ) के तैल से गन्धक और पारद को तथा वंग के सप्तमांश के ऊपर नाग बारहवाँ भाग देकर सब मिलाकर पीस लेवे, इस प्रकार करने से स्वयं वंग तार ( रजत ) हो जाता है ॥ ६–७ ॥

ॐ हे मनोहरे स्वाहा इति मन्त्रं तदा जपेत् ।

ॐ हे मनो० इस मन्त्र को उस समय में जपना चाहिये ।

वाकुचीत्रिफलाव्योषकृशानुचिरबिल्वकान् ॥ ८ ॥
निम्बवन्दाकसहितान् गवां मूत्रेण पेषयेत् ।

वाकुची, त्रिफला, व्योष ( त्रिकटु ), कृशानु ( चित्रक ), चिरबिल्व, निम्ब और वन्दाक को गौ के मूत्र से पीस लेवै ॥ ८ ॥

अष्टादशविधान कुष्ठान् निर्मूलयति तत्क्षणात् ॥ ९ ॥

यह उसी क्षण में अठारहो प्रकार के कुष्ठ को निर्मूल करता है ॥ ९ ॥

उष्णोदकेन तच्चूर्णं सव्योषं शूलवेगजित् ।

वाकुची का चूर्ण त्रिकटु के साथ उष्णोदक से पीने से शूलवेग को नष्ट करता है ।

सोमराजीमरिचयोश्चूर्णं वातविनाशकम् ॥ १० ॥

सोमराजी ( वाकुची ) और मरिच का चूर्ण वातविनाशक होता है ॥१०॥

---

## अथ रुदन्तीकल्पः

रुदन्त्यां विद्यमानायां मयि चात्र प्रिये ! जनाः ।
जरया दुर्बलेनापि कुतः क्लिश्यन्यि भूतले ॥ १ ॥



हे प्रिये ! मुझ रुदन्ती के विद्यमान रहने पर वृद्धावस्था और दुर्बलता से मनुष्य पृथ्वीतल पर क्योंकर कष्ट भोगते हैं ॥ १ ॥

रुदन्तीलक्षणं वच्मि लोकानां हितकाम्यया ।
श्वेता रक्ता तथा पीता कृष्णा चैव चतुर्विधा ॥ २ ॥

प्राणियों के हित की कामना से रुदन्ती का लक्षण कहते हैं :—यह श्वेत, रक्त, पीत और और कष्ण भेद से चार प्रकार की होती है ॥ २ ॥

तत्पत्रं चणकस्येव पुष्पं चापि तथाविधम् ।
पत्रेषु स्युर्हेमसमा बिन्दवः सकलेषु च ॥ ३ ॥

उसका पत्र चना के पत्र के समान होता है तथा पुष्प भी उसी प्रकार ( चना के पुष्प के समान ) ही होता है । सभी पत्रों पर स्वर्ण के समान बिन्दु होती है ॥ ३ ॥

रसबन्धकरी ख्याता योगोक्तफलदायिनी ।

यह रस ( पारद ) का बन्ध करने वाली तथा योगशास्त्र के वर्णित फल देने वाली प्रसिद्ध है ।

तमोषधिं समादाय शुक्लपक्षे शुभे दिने ॥ ४ ॥
सूक्ष्मचूर्णं ततः कृत्वा कटुतुम्ब्यां विनिक्षिपेत् ।

शुक्ल पक्ष के शुभ दिन में उस औषध को लेकर सूक्ष्म चूर्ण बनाकर कड़वी तुम्बी में रखे ॥ ४ ॥

कर्षमात्रप्रमाणेन पथ्यभोजी शुभे दिने ॥ ५ ॥
मध्वाज्याभ्यां भजेत् कृष्णाच्चूर्णक्षीरान्नभुग्भवेत् ।

पथ्य का भक्षण करते हुए शुभ दिन से एक कर्ष प्रमाण में मधु और घृत से सेवन करे तथा कृष्णा ( पीपरि ) चूर्ण और दुग्ध से अन्न का भक्षण करे ॥ ५ ॥

षण्मासस्य प्रयोगेण वज्रकायो भवेन्नरः ॥ ६ ॥

इस प्रकार ६ मास के प्रयोग से मनुष्य वज्र के समान देह वाला होता है ॥ ६ ॥

पञ्चाङ्गान्यस्य भुक्त्वा तु विमुच्येताखिलामयैः ।

इसके पञ्चाङ्ग का भक्षण कर मनुष्य सभी रोगों से मुक्त होता है ।

विडालपदमात्रं तदन्वहं यो भजेन्नरः ॥ ७ ॥
न शीघ्रं स्याज्जरा तस्य वर्धते प्रत्यहं वयः ।

विडालपद ( १ कर्ष ) के प्रमाण में प्रतिदिन जो मनुष्य सेवन करता है; उसको बुढ़ापा जल्दी नहीं आती है और दिन-प्रतिदिन उसकी आयु बढ़ती है ॥

पानेन लेपनाच्चापि विषं हन्त्यस्य चूर्णकम् ॥ ८ ॥

पान करने से और लेपन करने से इसका चूर्ण विष को नष्ट करता है ॥

रुदन्तीमूलचूर्णेन वत्सरेण विषं तथा ।
टङ्कणं तगरं कुष्ठं पेषयेद् द्रावणं परम् ॥ ९ ॥

एक वर्ष तक स्थापित रुदन्ती-मूल के चूर्ण से विष ( वत्सनाभ ), टंकण, तगर और कुष्ठ को पीसे, यह उत्कृष्ट द्रावण ( धातु द्रव्य ) है ॥ ९ ॥

संगृह्याङ्गानि पञ्चापि रुदन्त्याश्चूर्णयेत् परम् ।
मध्वाज्याभ्यां च भुङ्क्ते यः प्रातरुत्थाय मानवः ॥ १० ॥
सन्धुक्षिताग्निरामाच्च विमुक्तः सम्यगन्वहम् ।
भुङ्क्तेऽन्नमधिकं किञ्च नश्यन्त्यन्त्रगतामयाः ॥ ११ ॥

रुदन्ती के पंचांग को ग्रहण करके चूर्ण बनावे और जो मनुष्य प्रातःकाल उठ कर मधु और घृत से भक्षण करता है उसकी अग्नि दीप्त होती है, वह आम से मुक्त होता है तथा प्रतिदिन अधिक अन्न भक्षण करता है और अन्त्र के सभी रोग विनष्ट हो जाते हैं ॥ १०-११ ॥

बालार्कसमतेजस्वी वाचा सुरगुरुपमः ।
मेधावी सुभगः श्रीमान् सुतरां स्याद् बलाधिकः ॥ १२ ॥

वह बालार्क ( उदीयमान सूर्य ) के समान तेजस्वी, वाणी में देवगुरु ( बृहस्पति ) के समान मेधावी, सौभाग्यशाली, कान्तिमान तथा निरन्तर अधिक बल-संपन्न होता है ॥ १२ ॥

साधकानां च सर्वेषां रुदन्ती परमा मता ।
रुदन्तीरसमादाय रसेन सह भावयेत् ॥ १३ ॥
लेपयेच्छुल्बपत्राणि शतैर्गजपुटैः पुटेत् ।
काञ्चनं कमनीयाभं जायते चोत्तमोत्तमम् ॥ १४ ॥



सभी साधकों के लिए रुदन्ती उत्कृष्ट मानी जाती है ।

रुदन्ती-रस को लेकर पारद से भावित करे, उससे ताम्र के पत्रों को लिप्त करे एवं सौ गजपुट में फूंक देवे ।

इससे सुन्दर कान्तिवाला अत्युत्तम स्वर्ण हो जाता है ॥ १३-१४ ॥

हेमाभ्रकौ रुदन्त्याश्च रसेन परिमर्दयेत् ।
ततः शुल्वं पारदं च निक्षिपेन्मर्दयेन्मुहु ॥ १५ ॥
यथापूर्वं पुटैः स्याद्धि सुवर्णं शोभनं गुणैः ।

रुदन्ती के रस से स्वर्ण और अभ्रक का मर्दन करे, फिर ताम्र और पारद उसमें डालकर पुनः बार-बार मर्दन करे । पूर्ववत् १०० गजपुट से गुणों से श्रेष्ठ सुवर्ण हो जाता है ॥ १५ ॥

रसं रुदन्त्याः सूतं च मर्दयेत् खल्वमध्यके ।
भृदूनि च रजांस्यत्र हिरण्यस्य विनिक्षिपेत् ॥ १६ ॥
पूरयित्वा काचमयं पात्रं तद्वेष्टयेन्मुखे ।
अधस्ताच्च धमेत्तीव्रं मुहुर्गाढेन वह्निना ॥ १७ ॥
कृत्वैवं द्वे दिने तस्मात् पात्रादौषधमाहरेत् ।
बीजपूररसेनैतद्यावन्मासं भजेन्नरः ॥ १८ ॥
वर्धन्ते धातवः सर्वे प्रत्यहं बलमाप्नुयात् ।
नीरोगः पुरुषः प्राप्य दीर्घमायुः सुखी भवेत् ॥ १९ ॥

खरल के मध्य में रुदन्ती का रस और पारद एक साथ घोटे और इसी में स्वर्ण के सूक्ष्म खण्ड डाल देवे और उसे कांच की कूपी में भरकर मुँह बन्द कर देवे, नीचे से खूब तेज आंच देवे, दो दिन तक इस प्रकार आंच देकर, बाद में उस पात्र से औषध को ग्रहण करे, इसे मनुष्य बीजपूर ( बिजौरा नींबू ) के रस से एक मास तक भक्षण करे ।

सभी धातुएँ बढ़ती हैं, प्रतिदिन बल प्राप्त करता है, निरोग होकर मनुष्य लम्बी अवस्था पाकर सुखी होता है ॥ १६-१९ ॥

कांस्यपात्रे रसं तस्याः समादाय पिबेन्नरः ।
सर्वव्याधिविनिर्मुक्तो दीर्घं विन्दति जीवितम् ॥ २० ॥

कांस्यपात्र में उसका रस ग्रहण करके पान करने से मनुष्य सभी व्याधि से मुक्त होकर दीर्घ आयु प्राप्त करता है ॥ २० ॥

रसनागौ समौ दत्त्वा माक्षिकं च मनश्शिलाम् ।
गन्धकं तालकं चैव पिष्ट्वा मूत्रे विनिक्षिपेत् ॥ २१ ॥
रुदन्त्याश्च रसेनैव मर्दयेद्धटिकात्रयम् ।
तेनैव ताम्रपत्राणि लेपयेच्च विचक्षणः ॥ २२ ॥
मूषामध्ये क्षिपेत् पश्चाद् ध्मानं खदिरवह्निना ।
कुर्यात् स्वर्णं जायते च निर्बीजं दोषवर्जितम् ॥ २३ ॥

रस ( पारद ) और नाग ( सीसा ) समान भाग में लेकर, माक्षिक ( स्वर्णमाक्षिक ), मनःशिला, गन्धक, तालक ( हरताल ) को पीस कर ( गो ) मूत्र में छोड़ देवें, फिर रुदन्ती के रस से तीन घटी ( १ घण्टा १२ मिनट ) तक घोटे और उसी से विद्वान मनुष्य ताम्र के पतले पत्रों को लिप्त करे और मूषा से रख कर खदिर की आंच देवे तो निर्बीज दोषरहित स्वर्ण हो जाता है ॥ २१–२३ ॥

नस्यैः पानैस्तथा चैव लेपनैश्चापि सर्वदा ।
जङ्गमस्थावराख्यानि विषाण्युपविषाणि च ॥ २४ ॥
नश्यन्ति नियतं देवि नात्र कार्या विचारणा ।

( रुदन्ती ) के नस्य, पान और लेपन से जंगम तथा स्थावर सभी प्रकार के विष और उपविष हमेशा के लिए निश्चित रूप से नष्ट होते हैं । हे देवि ! इसमें विचार ( सन्देह ) की आवश्यकता नहीं है ॥ २४ ॥

अमृतेऽमृतमयेऽमृतसम्भवेऽमृतं मे कुरु । प्रसीद प्रसीद । अमृतोद्भवे ॐ जूं सः स्वाहा—इति मन्त्रेण भक्षयेत् ।

उत्पत्तिरस्याः कुत्रेपि वदाम्यद्य वरानने !

अमृतेऽमृतमयेऽमृतसंभवेऽमृतं मे कुरु । प्रसीद प्रसीद । चमृतोद्भवे ॐ जूं सः स्वाहा ।

इस मंत्र को पढ़कर जप करे ।

हे वरानने ! इसकी उत्पत्ति कहाँ से होती है, इसको बतलाता हूँ ।



कैलासे मन्दरे विन्ध्ये गङ्गासागरसङ्गमे ॥ २५ ॥
श्रीशैले हेमकूटे च पारिजाते महेश्वरि ।
गिरीणां राज्ञि हिमवत्यथ पुण्यगिरिष्वपि ॥ २६ ॥
इत्यमीषु प्रदेशेषु जायतेऽसौ महौषधिः ।

कैलाश, मन्दर, विन्ध्य, गंगा और समुद्र के संगमस्थल, श्रीशैल, हेम कूट, पारिजात, पर्वतों के राजा हिमालय और अन्य पुण्य पर्वत आदि इन स्थानों में, हे महेश्वरी ! यह महौषधि उत्पन्न होती है ॥ २५–२६ ॥

अस्याः पूर्वं स्वरूपाणि मयोक्तानि महेश्वरि ! ॥ २७ ॥

हे महेश्वरी ! इसके स्वरूप के विषय में पहले ही बतला दिया है ॥ २७ ॥



## अथ कटुतुम्बीकल्पः

समुत्पन्ना मथ्यमाने क्षीरोदे कटुतुम्बिका ।
पिबेद्रसं गृहीत्वास्याः कटुतुम्ब्या रसायनम् ॥ १ ॥

क्षीरसागर के मन्थन के समय यह कटुतुम्बी उत्पन्न हुई है । इस कटुतुम्बी के रस को ग्रहण करके पान करे तो रसायन है ॥ १ ॥

अस्याः संगृह्य बीजानि कुर्याच्चूर्णं सुसूक्ष्मशः ।
रात्रौ तु पयसा सार्धं शुण्ठ्या च सुविमिश्रितम् ॥ २ ॥
स्थापयेत् कारयेच्चैव भावनां दशधा नरः ।
ततः संशोष्य चूर्णानि तानि संमर्द्य यत्नतः ॥ ३ ॥
ग्राह्यं तैलं ततः शुद्धं गालनेन विधाय च ।
मूर्च्छयेत् पारदं तेन तैलेन विधिवत्ततः ॥ ४ ॥

इसके बीजों को लेकर उसका सूक्ष्म चूर्ण बना लेवे, रात्रि में शुण्ठी के साथ दूध मिलाकर रखे और इसी प्रकार दस बार भावना करे, फिर चूर्ण को सुखाकर विधिवत् मर्दन कर गालन क्रिया ( कोल्हू ) से शुद्ध तैल ग्रहण करे । इस तैल से बाद में विधिवत् पारद को मूर्च्छित करे ॥ २–४ ॥

एकविंशतिरात्रेण स्पर्शवेधी भवेद्रसः ।
लोहान् सर्वांश्च तेनैव वेधयेत् स्पर्शमात्रतः ॥ ५ ॥

इक्कीस रात्रि से रस ( पारद ) स्पर्शवेधी हो जाता है, उसी से सभी लौह ( धातुओं ) का स्पर्शमात्र से वेध करे ॥ ५ ॥

**अनेनैव प्रयोगेण स्पर्शवेध्यभ्रकं भवेत् ।**

इसी प्रयोग से अभ्रक स्पर्शवेधी होता है ।

**इन्द्रवारुणिबीजानि चूर्णयित्वा विधानतः ॥ ६ ॥**
**पलाशबीजतैलेन भावयेच्च पुनः पुनः ।**
**ततो यन्त्रेण निष्पीड्य पूर्ववत्तैलमाहरेत् ॥ ७ ॥**

इन्द्रवारुणी के बीज को विधिपूर्वक चूर्ण करके, पलाश बीज के तैल से बार-बार भावित करे, फिर यन्त्र ( कोल्हू ) से पेर कर पूर्ववत् तैल को ग्रहण करे ॥ ६–७ ॥

**तैलस्यास्यैकभागश्च पूर्वतैलस्य भागवत् ।**
**संमिश्याथात्र सूतायस्कान्तयोर्भस्म योजयेत् ॥ ८ ॥**
**भस्मनोरनयोश्चापि चत्वारीह पलानि च ।**
**एवं संयोजितादस्मादौषधादर्धकर्षकम् ॥ ९ ॥**
**कर्षं वा भोजयेद्दोषवयःप्रकृतिविद्भिषक् ।**
**द्वित्रिमासप्रयोगेण स्याद् बली मांसलः शुभः ॥ १० ॥**

पूर्ववत् तैल के भाग के समान इस तैल को एक भाग और पारद और अयस्कान्त की भस्म मिलाकर युक्त करे, इन दोनों भस्मों के चार-चार पल, इस प्रकार मिलाई हुई इस औषध से आधा कर्ष या एक कर्ष प्रमाण में दीर्घ आयु और प्रकृति को समझ को समझ कर वैद्य खिलावे ।

दो-तीन मास के प्रयोग से बलवान्, मांसल और श्रेष्ठ होता है ॥८–१०॥

**तत्र मन्त्रः—ॐ नमो भगवति क्षीरकञ्चुकि सर्वकामार्थसाधिनि तिष्ठ तिष्ठ स्वाहा ॥**

## अथ इलियालेपकल्पः

**एरण्डसदृशैः पत्रैः फलैश्चैव तु तादृशैः ।**
**अजाङ्गलायां वृक्षः स क्षुद्रः सञ्जायते भुवि ॥ १ ॥**
**इलियालेप इत्येवं शास्त्रज्ञैरेव कथ्यते ।**



एरण्ड के सदृश पत्र और फल से युक्त अजांगल वृक्षों से क्षुद्र वृक्ष होता है । इलियालेप नाम से शास्त्रज्ञ कहते हैं ॥ १ ॥

**कट्वेरण्ड इति प्रायः ख्यातो नामान्तरेण च ॥ २ ॥**

तथा कड़वा एरण्ड ( कटु-एरण्ड ) इस अन्य नाम से यह प्रायः प्रसिद्ध है ॥ २ ॥

**रसेन तस्य पात्राणां पारदं चाभ्रकं तथा ।**
**एकत्र मर्दयेद्देवि पिष्टं भवति तत्क्षणात् ॥ ३ ॥**

उसके पत्र के रस से पारद और अभ्रक एक जगह मर्दित करे तो वह तुरत पिष्ट हो जाता है ॥ ३ ॥

**पुनश्च मर्दयेदेवं सूतः सम्बध्यते ध्रुवम् ।**

फिर इसी प्रकार मर्दन करने से पारद निश्चित रूप से बद्ध होता है ।

**तस्य कन्दं समादाय गृहीत्वा स्वरसं ततः ॥ ४ ॥**
**कृष्णाखण्डानि तस्मिंश्च पाचयेद् याममात्रतः ।**
**यामैकं माहिषैः क्षीरैश्छायायां शोषयेत्ततः ॥ ५ ॥**

उसके कन्द को ग्रहण करके उसका स्वरस निकाले । उसमें कृष्णा ( पिप्पली ) के टुकड़ों को एक मास तक पकावे ।

फिर एक मास भैंस के दूध में पकावे, बाद में छाया में सुखा लेवे ॥४–५॥

**कर्षैकं भक्षयेन्नित्यं क्षुत्पिपासाहरं भवेत् ।**
**सिद्धयोगमिदं ख्यातं पुरा नागार्जुनोदितम् ॥ ६ ॥**

एक कर्ष प्रमाण में नित्य इस चूर्ण का प्रयोग करने से भूख और प्यास नष्ट होती है । यह सिद्धयोग नाम से प्रसिद्ध है । तथा पहले नागार्जुन ने इसका वर्णन किया है ॥ ६ ॥

**मन्त्रः—ॐ नमो भगवतेऽमृतार्णवमध्यसंस्थिताय मम शरीरेऽमृतं कुरु स्वाहा ॥**

## अथ निम्बकल्पः

**अङ्गानि पञ्च निम्बस्य यथाकालं समाहरेत् ।**
**छायायां शोषयेच्चाथ सूक्ष्मचूर्णं च कारयेत् ॥ १ ॥**

निम्ब के पंचांग यथासमय ग्रहण करके, छाया में सुखाकर सूक्ष्म चूर्ण बना लेवे ॥ १ ॥

**काथेन खदिरस्यापि भावयेद्वारपञ्चकम् ।**

खदिर के क्काथ से पाँच बार भावित करे ।

**चित्रकं च विडङ्गं च व्याधिघातकरञ्जकौ ॥ २ ॥**
**भल्लातकहरीतक्यौ धात्रीगोक्षुरकौ तथा ।**
**कासमर्दकबीजानि पिप्पल्यो मरिचानि च ॥ ३ ॥**
**द्वे हरिद्रे लोहचूर्णसंयुतौ तत्प्रमाणतः ।**
**भावयेद् भृङ्गराजस्य पञ्चनिम्बस्य तान् रसैः ॥ ४ ॥**

चित्रक, विडंग, व्याधिघात ( अमलतास ), करंज, भल्लातक, हरीतकी, धात्री ( आमला ), गोखरू, कासमर्द ( चकवड़ ) के बीज, पिप्पली, मरिच, दोनों प्रकार की हरिद्रा और उसी प्रमाण में लौह के चूर्ण ( भस्म ) से युक्त, इन सब चीजों को भृङ्गराज तथा पञ्चनिम्ब के रस से भावना देवे ॥ २-४ ॥

**विडालपदमात्रं तु पयसालोड्य कारयेत् ।**

फिर दूध से आलोडित कर विडालपद ( कर्ष ) के प्रमाण की गोलियाँ बना लेवे ।

**वटिकास्तास्ततः प्रातः शुद्धकोष्ठे भजेज्जलैः ॥ ५ ॥**

इन वटिकाओं को शुद्ध कोष्ठ होकर जल से प्रातःकाल सेवन करे ॥ ५ ॥

**तत्क्षणादौषधं चैतज्जीर्यत्यत्र न संशयः ।**

यह औषध उसी क्षण जीर्ण होती है, इसमें सन्देह नहीं है ।

**न किञ्चित्परिहारोऽस्ति भोजनं सर्वमाहरेत् ॥ ६ ॥**

इसमें कोई परहेज नहीं है, सभी प्रकार का भोजन कर सकते हैं ॥ ६ ॥

**द्वित्रिमासप्रयोगेण जायते वीर्यवान्नरः ।**
**कुष्ठमष्टादशविधं सप्तसप्ताहैर्नाशयेदिदम् ॥ ७ ॥**

दो-तीन मास के प्रयोग से मनुष्य वीर्यवान् ( वीर्यसम्पन्न ) होता है तथा सात सप्ताह सेवन करने से अठारह प्रकार के कुष्ठ को यह नष्ट करता है ॥ ७ ॥



**वातगुल्मं च पलितं व्याधीन् सर्वान् विशेषतः ।**
**हन्ति मेहानशेषांश्च नाशयेच्चक्षुरामयान् ॥ ८ ॥**

वातगुल्म, पलित तथा अन्य सभी व्याधियों को विशेष करके सभी प्रकार के प्रमेह को नष्ट करता है और आँख के रोगों को भी नष्ट करता है ॥ ८ ॥

**शतवर्षाधिकं जीवेज्जरया च विवर्जितः ।**
**सत्यं सत्यं महावीर्यं पञ्चनिम्बरसायनम् ॥ ९ ॥**

वृद्धावस्था से रहित सौ वर्ष से भी अधिक आयु पर्यन्त जीवित रहता है । यह पञ्चनिम्ब रसायन अधिक वीर्यशाली है, यह ध्रुव सत्य है ॥ ९ ॥

## अथ तृणज्योतिष्कल्पः

**तृणं तैजसमेकं तु विद्यते विबुधेश्वरि !**

हे विबुधेश्वरि ! तेजः स्वरूप तृणविशेष एक होता है ।

**रात्रौ प्रज्वलते तत्तु हिरण्यसदृशं भवेत् ॥ १ ॥**

वह रात्रि में प्रज्वलित होता है और स्वर्ण के समान रहता है ॥ १ ॥

**तस्य मूलं समादाय क्षीरेण सह पेषयेत् ।**
**क्षणात्तद् रक्तवर्णं स्यात्तत्क्षीरं च पिबेन्नरः ॥ २ ॥**

उसका मूल ग्रहण करके दुग्ध के साथ पीसे, वह क्षण मात्र में रक्तवर्ण का हो जाता है, उस क्षीर को मनुष्य पान करे ॥ २ ॥

**सप्तरात्रप्रयोगेण बलं विन्दत्यनुत्तमम् ।**

सात रात तक उसके प्रयोग से श्रेष्ठ बल को प्राप्त करता है ।

**क्षीरेण नियताहारो लवणाम्लौ च वर्जयेत् ॥ ३ ॥**

दूध से आहार नियमित करके लवण और अम्लरस का परित्याग करे ॥ ३ ॥

**वृषभांशो महाकायो जीवेद्वर्षशतं नरः ।**

इस प्रयोग से मनुष्य वृषभ ( साँड ) के समान कन्धा वाला, विशाल शरीरधारी सौ वर्ष तक जीवित रहता है ।

**तस्य मूलं समानीय रसगन्धौ च तत्समौ ॥ ४ ॥**

निक्षिप्य मातुलुङ्गोत्थै रसैः सर्वं विमर्दयेत् ।
बिल्वपत्रैश्च संवेष्ट्य दापयेच्च पुटत्रयम् ॥ ५ ॥
हेमच्छायं महावीर्यं रसायनमथोद्भवेत् ।

उसके मूल को ग्रहण करके, उसके समान ही रस ( पारद ) और गन्ध ( गन्धक ) मिलाकर मातुलुंग के रस से सभी का मर्दन करैं, फिर बिल्व पत्र से आवेष्टित कर तीन पुट देवैं । यह रसायन स्वर्ण की कान्ति वाला तथा अधिक शक्तिशाली होता है ॥ ४-५ ॥

महिषीनवनीतेन तस्य मूलानि पेषयेत् ॥ ६ ॥

भैंस के नवनीत ( मक्खन ) से उसके मूल को पीसे ॥ ६ ॥

कपिलाज्यप्रदीपस्य चोर्ध्वं नरकपालके ।
कज्जलं कारयेत्तच्च धारयेदष्टमीतिथौ ॥ ७ ॥

कपिला गौ के घृत का दीपक के ऊपर मनुष्य का कपाल रखकर कज्जल बना लेवै और उसे अष्टमी तिथि को धारण करैं ॥ ७ ॥

पूजां कृत्वा विधानेन शुचिर्भूत्वा च साधकः ।
तेनैवाञ्जितनेत्रस्तु सोऽदृश्यो जायते पुमान् ॥ ८ ॥

साधक पवित्र होकर, विधिपूर्वक पूजा करके उस कज्जल का नेत्र में अंजन करके मनुष्य अदृश्य हो जाता है ॥ ८ ॥



## अथ श्वेताकल्पः

पुष्यर्क्षेऽङ्गानि पञ्चापि श्वेतार्कस्याहरेद् बुधः ।
चूर्णयेदथ तच्चूर्णं मध्वाज्याभ्यां च भक्षयेत् ॥ १ ॥

पुष्य नक्षत्र में बुद्धिमान पुरुष श्वेतार्क ( सफेद मन्दार ) का पंचांग लावै, उसे चूर्ण करके मधु और घृत से भक्षण करें ॥ १ ॥

पुष्टिं तुष्टिं च मासेन याति वीर्यं विवर्धते ।

एक मास प्रयोग से पुष्टि ( पोषण ), तुष्टि ( संतोष ) प्राप्त होता है, वीर्य बढ़ता है ।



अङ्गानि पञ्च संगृह्य छायायां शोषयेत्ततः ॥ २ ॥
चूर्णीकृत्य ततो दुग्धैर्भावयेद्गव्यमाहिषैः ।
पञ्चधैव कृते तद्धि जायते चोत्तमौषधम् ॥ ३ ॥

( श्वेतार्क ) का पंचांग ग्रहण करके छाया में सुखावै, उसे चूर्ण करके गो या भैंस के दूध से भावना देवे, इस प्रकार पाँच भावना से ही यह उत्तम औषध हो जाता है ॥ २-३ ॥

जीर्णान्ते भोजयेत्तच्च क्षीरैः षष्टिकभुङ् नरः ।
वर्जयेत्तैलमात्रं तु मासमेव च सेवयेत् ॥ ४ ॥

औषध जीर्ण होने पर दूध से षष्टिक ( साठी ) के चावल का सेवन करे, तैल मात्र का परित्याग करे, इस प्रकार एक मास तक सेवन करे ॥ ४ ॥

रक्तस्य मेदसश्चापि मांसस्यापि विवर्धकम् ।
मतिं धृतिं च मेधां च वर्धयेद्वार्धकापहम् ॥ ५ ॥

यह रक्त, मेद और मांस का बढ़ाने वाला है और मति ( बुद्धि, ) धृति ( धैर्य ) और मेधा ( धारणशक्ति ) को बढ़ाता है तथा वृद्धावस्था को दूर करता है ॥ ५ ॥

अर्कस्येवास्य कान्तिश्च देहे समुपजायते ।

अर्क ( सूर्य ) के समान इसके देह में कान्ति उत्पन्न होती है ।

कट्वम्लतैलवर्जं च भक्षयेदन्नमन्वहम् ॥ ६ ॥
अनेनैव विधानेन कार्यसिद्धिर्भवेद् ध्रुवम् ।

कटु, अम्ल और तैल से रहित अन्न प्रतिदिन भक्षण करे, इसी विधान से निश्चित रूप से कार्यसिद्धि होती है ॥ ६ ॥



## अथ भूकदम्बकल्पः

भूकदम्बस्त्रिधा प्रोक्तः शुक्लो रक्तोऽसितस्तथा ।
पुष्यर्क्षे च सिते पक्षे समूलं पल्लवान्वितम् ॥ १ ॥
गृहीत्वा शोषयित्वा च छायायां चूर्णयेत्ततः ।

भूकदम्ब तीन प्रकार का कहा गया है :—

शुक्ल, रक्त और कृष्ण भेद से, पुष्य नक्षत्र के शुक्ल पक्ष में मूल और पल्लव सहित ग्रहण करके छाया में सुखाकर चूर्ण बना लेवे ॥ १ ॥

**सुदिने शुभनक्षत्रे सर्पिषा सह भक्षयेत् ॥ २ ॥**

अच्छे दिन और शुभमुहूर्त में घृत के साथ भक्षण करे ॥ २ ॥

**जीर्णान्ते चाथ भुञ्जीत क्षीरान्नं नियतेन्द्रियः ।**
**षण्मासयोगतो याति बली मुक्ताखिलामयः ॥ ३ ॥**

जीर्ण होने पर इन्द्रियों को वश में रखकर क्षीरान्न ( दुग्ध से अन्न ) भक्षण करे, इस प्रकार ६ मास के प्रयोग करने से बलवान् सभी व्याधियों से मुक्त मनुष्य होता है ॥ ३ ॥

**घृतेन मधुना युक्तं सर्वव्याधीन् विनाशयेत् ।**

घृत और मधु से युक्त सभी व्याधियों को नष्ट करता है ।

**सर्पिषैव प्रयुक्तं चेत् पक्षेणान्त्रामयान् हरत् ॥ ४ ॥**

केवल घृत से प्रयोग करने से एक पक्ष में ही अन्त्रगत व्याधियों को नष्ट करता है ॥ ४ ॥

**वातं काञ्जिकसंयुक्ते पित्तं जलसमन्विते ।**
**जलोदरं च तक्रेण गुल्मं दध्ना प्रयोजिते ॥ ५ ॥**
**कुष्ठं मध्वाज्यसंयुक्ते पयसा रक्तपित्तकम् ।**
**भूकदम्बस्य गुणाः श्लाघ्या एवं सुरेश्वरि ! ॥ ६ ॥**

काञ्जी के साथ वायु, जल के साथ पित्त, तक्र से जलोदर, दही से प्रयोग करने से गुल्म, मधु और घृत के साथ प्रयोग करने से कुष्ठ, दूध से रक्तपित्त को नष्ट करता है। हे सुरेश्वरि ! इस प्रकार भूकदम्ब के प्रशंसनीय गुण हैं ॥ ५–६ ॥

**ओम् अमृतोद्भवाय अमृतं मे कुरु ठः ठः स्वाहा ।**



## अथ गन्धककल्पः

**शृणु देवि प्रवक्ष्यामि यथा योगेन गन्धकम् ।**
**योगेषु च बहुष्वेष योक्तुमर्हो महागुणः ॥ १ ॥**

हे देवि ! जिस तरह गन्धक बहुत से योगों में प्रयुक्त होता है अतः अनेक गुणकारी होता है, उसे मैं कहता हूँ, सुनो ॥ १ ॥

**क्षीराम्भोधौ पुरा देवि मथ्यमाने सुरासुरैः ।**
**उत्पन्नममृतं सारं दिव्यरूपं महाबलम् ॥ २ ॥**

पहले देव-दानवों से क्षीर समुद्र के मन्थन के समय यह सारभूत अधिक बलशाली दिव्यरूप अमृत उत्पन्न हुआ ॥ २ ॥

**तस्य शोणितगन्धेन मोहिताः सर्वदेवताः ।**
**किट्टमेतत् सुधायाश्च बभूवाथास्य गन्धतः ॥ ३ ॥**

इसके शोणित ( रक्त ) गन्ध से सभी देवता मोहित ( मूर्च्छित ) हो गये, बाद में इसी के गन्ध से यह सुधा ( अमृत ) का किट्ट ( मल ) हो गया ॥३॥

**गन्धकश्चेति विख्यातो जराव्याधिविनाशकः ।**

गन्धक नाम से विख्यात यह जरा ( बुढ़ापा ) और व्याधि का नाश करने वाला है ।

**पीतश्चैव तथा श्वेतः कृष्णवर्णस्तृतीयकः ॥ ४ ॥**
**आरक्तश्च चतुर्थः स्यादेवं भिन्नः स गन्धकः ।**

यह गन्धक—पीत, श्वेत, कृष्ण और रक्त भेद से चार प्रकार का होता है ॥ ४ ॥

**वमनं रेचनं कृत्वा रसायनमथाचरेत् ॥ ५ ॥**

वमन और विरेचन लेकर इस रसायन का सेवन करे ॥ ५ ॥

**शुभे मुहूर्ते नक्षत्रे चार्चयित्वा जगत्पतिम् ।**
**वक्ष्यमाणप्रयोगेण भक्षयेत् कानि कानि चित् ॥ ६ ॥**

शुभ मुहूर्त और नक्षत्र में जगत्पति ( भगवान् विष्णु ) का पूजन करके आगे कहे जाने वाले प्रयोगों में से किसी एक का भक्षण करे ॥ ६ ॥

षष्टिकानि च धान्यानि यवगोधूमकावपि।
बालकानि च मांसानि तित्तिरेश्छागलानि च ॥ ७ ॥
कृष्णमुद्गाश्च सर्पिश्च सिता क्षीरं तथैव च।
एतान्येव सदा पथ्यान्यपथ्यानि विवर्जयेत् ॥ ८ ॥

षष्टिक ( साठी ) धान, यव, गोधूम, तित्तिर और छागल ( बकरा ) का बाल ( नवीन ) मांस, कालामूग, घृत, दूध और मिश्री, यह सब हमेशा पथ्य हैं, अपथ्य का वर्जन करे ॥ ७-८ ॥

कटुतैलं कषायादितैलं काञ्जिकराजिके।
लवणाम्लविपाकानि द्विदलानि विवर्जयेत् ॥ ९ ॥
कोद्रवान्नं कुलत्थश्च न पथ्यौ रसकर्मणि।
यानाद्यारोहणं पानमायासांश्चापरांस्त्यजेत् ॥ १० ॥

कटु तैल ( सरसों का तैल ), कषायादि तैल ( बरँ आदि का तैल ), काँजी, राई, जिनका लवण और अम्ल विपाक हो, द्विदल; कोद्रव ( कोदो ) और कुलत्थ रसकर्म में पथ्य नहीं हैं तथा यान ( द्रुतगामी यान अश्व आदि ) का आरोहण, पान ( सुरापान ) तथा आयास ( अधिक परिश्रम वाला कार्य ) का भी परित्याग करे ॥ ९-१० ॥

मन्त्रेणानेन संमन्त्र्य भक्षयेत्तु बलिं प्रिये।

इस मन्त्र से अभिमन्त्रित करके गन्धक का भक्षण करे :—

ॐ नमो भैरवाय अमृतसिद्धाय अमृतसन्धाय जातवेदेन धेवेन्द्रेण अमृतत्वं कुरुष्व मां स्वाहा—अनेन मन्त्रजपेन गन्धकं ग्राहयेत्।

ॐ नमो भैरवाय अमृतसिद्धाय अमृतसंधाय जातवेदेन देवेन्द्रेण अमृतत्वं कुरुष्व मां स्वाहा।

इस मन्त्र का जप करते हुए गन्धक का ग्रहण करावे।

गन्धकं त्रिफलाचूर्णं भृङ्गराजं समांशकम् ॥ ११ ॥
संवत्सरं प्रयुञ्जीत दीर्घं प्रादुर्भवेद्वयः।

गन्धक, त्रिफलाचूर्ण और भृङ्गराज को समप्रमाण में एक वर्ष तक प्रयोग करने से दीर्घ आयु प्राप्त होती है ॥ ११ ॥



गन्धकं त्रिफलाक्वाथैः कर्षार्धं प्रत्यहं भजेत् ॥ १२ ॥
रक्तदोषाः प्रणश्यन्ति त्वग्रोगाश्चापि मासतः।

आधा कर्ष प्रमाण में गन्धक को त्रिफला के क्वाथ से प्रतिदिन एक मास तक प्रयोग करने से रक्त दोष तथा चर्मदोष नष्ट हो जाते हैं ॥ १२ ॥

गन्धकस्त्रिफलायुक्तो घृतेन मधुनापि वा ॥ १३ ॥
भक्षितो हि महारोगान् नाशयेन्नात्र संशयः।

त्रिफला के साथ गन्धक को घृत अथवा मधु से भक्षण करने से महारोग नष्ट होते हैं इसमें सन्देह नहीं है ॥ १३ ॥

गन्धकं सूतकं चैव निर्गुण्ड्याः स्वरसेन हि ॥ १४ ॥
मर्दयेत्त्रिदिनं माषमात्रया कारयेद्वटीः।
कुष्ठमष्टादशविधं विषं चापि हरेज्ज्वरम् ॥ १५ ॥

गन्धक और पारद को निर्गुण्डी के रस से तीन दिन तक घोट कर उर्द के समान गोली बना लेवे, यह अठारह प्रकार के कुष्ठ, विष और ज्वर को नष्ट करता है ॥ १४-१५ ॥

गन्धतैलं गलत्कुष्ठं हन्ति लेपाच्च भक्षणात्।

गन्धक के तैल लेप तथा भक्षण करने से गलत्कुष्ठ का नाश होता है।

गन्धकं मर्दयेत् सम्यग् निर्गुण्डीलाङ्गलीजलैः ॥ १६ ॥
ततो रसं च तैरेव गन्धकेन च मर्दयेत्।
नवनीतसमं तेन निक्षिपेन्मर्दयेत् पुनः ॥ १७ ॥
ततः सर्वं च संभूय जायते वरपिष्टिका।
पिष्टिकां तां ततो दद्यात् पुटे वैद्यः सकृल्लघौ ॥ १८ ॥
स जायते भस्मसाच्च स रोगान् माशयेद्बहून्।

गन्धक को भलीभाँति निर्गुण्डी और लांगली के स्वरस से मर्दन करे फिर रस ( पारद ) को भी उन्हीं से तथा उसी गन्धक को मिलाकर मर्दन करे, उसके समान नवनीत ( मक्खन ) डाल कर पुनः मर्दन करे। वह सब मिलकर एक पिष्टमय हो जाता है। उस पिष्टिका को वैद्य लघुपुट में एक बार फूँक देवे। वह भस्म हो जाता है और बहुत से रोगों को विनष्ट करता है ॥ १६-१८ ॥

तेनैव भस्मना हेमपत्राणि च विलेपयेत् ॥ १९ ॥
पुटैस्त्रिभिर्भवेत् स्वर्णं मारितं नात्र संशयः ।

उसी भस्म से स्वर्ण के पत्रों को लिप्त करे, इस प्रकार तीन पुट से स्वर्ण मृत होता है इसमें सन्देह नहीं है ॥ १९ ॥

पुनर्नवान्वितं गन्धं त्रिविधं विषनाशनम् ॥ २० ॥

पुनर्नवा से युक्त गन्धक तीनों प्रकार के विष को नष्ट करने वाला है ॥२० ॥

धात्रीरसेन संयुक्तमजीर्णं नाशयेद् ध्रुवम् ।
गुडेन सहितश्चैष प्रमेहं च विनाशयेत् ॥ २१ ॥

धात्री ( आमलकी ) के रस से युक्त अजीर्ण निश्चित रूप से नष्ट करता है । और गुड़ के साथ प्रमेह को विनष्ट करता है ॥ २१ ॥

रसेन सहितं गन्धं काचकूप्यां विनिक्षिपेत् ।
समृदा वाससा सप्त कञ्चुकान् दापयेत्ततः ॥ २२ ॥
शोषयित्वा घटस्यान्तः स्थापयेत सिकतान्तरे ।
गाढाग्निना पचेद्यामदशकं जायते ततः ॥ २३ ॥
सिन्दूराभं महद्वीर्यं रसायनमनुत्तमम् ।
तेन रोगा विनश्यन्ति विविधा जायते बलम् ॥ २४ ॥

रस ( पारद ) के साथ गन्धक को काच की मूषा में रखकर ऊपर से सात बार कपड़मिट्टी करके सुखा लेवे, इसे घर में बालू के मध्य में रखकर ( बालुका-यंत्र ) में दश याम तक कड़ी आँच देवे, इससे सिन्दूर के समान अधिक वीर्य-शाली उत्तम रसायन बनता है, जिससे अनेक प्रकार के रोग शान्त होते हैं और बल ( वृद्धि ) होता है ॥ २२-२४ ॥

## अथ देवदालीकल्पः

देवदालीरसं चापि द्विगुणं ग्राहयेद् घृतम् ।
धात्रीरसेन संयुक्तं पाचयेल्लोहभाजने ॥ १ ॥
धात्र्याः शुष्केन्धनेनैव पाचयेल्लघुवह्निना ।
नस्ये पाने च युञ्जीत तद् घृतं प्रत्यहं द्विधा ॥ २ ॥



घृत से द्विगुण देवदाली का रस और आमला का रस ( समान ) मिला-कर लौह पात्र में धात्री ( आमला ) की सूखी लकड़ियों की हल्की आँच पर पकावे । इस घृत को नस्य और पान में प्रतिदिन दो बार प्रयोग करे ॥१-२॥

क्षीरं क्षीरयुतं चान्नं पथ्यत्वेन प्रकीर्त्यते ।
अपस्मारः क्षयः कुष्ठं वातरोगोऽपि नश्यति ॥ ३ ॥

क्षीर ( दुग्ध ) और दुग्धमिश्रित अन्न पथ्य है इससे अपस्मार, क्षय, कुष्ठरोग और वात रोग नष्ट होते हैं ॥ ३ ॥

नस्यं तद् भूतरक्षांसि सप्तमासैर्वशं नयेत् ।

सात मास प्रयोग करने से यह नस्य भूत और राक्षसों को वश में करता है ।

देवदालीरसः क्षौद्रं पारदस्तु दशांशतः ॥ ४ ॥
एकत्र मर्दितः कार्यो वटकत्वेन मुद्गवत् ।
प्रदरे च तथान्येषु ऋतुशूलेषु योजयेत् ॥ ५ ॥

देवदाली का रस और मधु तथा दशांश पारद को एकत्र मर्दन करके मूँग के समान वटक ( गोली ) बना लेवे । उसे प्रदर में तथा ऋतुकालिक ( आर्तव-सम्बन्धी ) शूल में प्रयुक्त करे ॥ ४-५ ॥

जननं च शिशोरस्य प्रयोगेण सुखं भवेत् ।

इसके प्रयोग से पुत्र की उत्पत्ति ( Presentation or Labow ) सुख-कर होता है ।

देवदालीरसं क्षौद्रं सर्पिरामलकीरसम् ॥ ६ ॥
मृदित्वा भर्जितैर्मुद्गचूर्णैः सह दिनद्वयम् ।
भक्षयेत् कर्षमात्रं तु मतिर्वर्धेत धातुभिः ॥ ७ ॥

देवदाली का रस, शहद, घृत और आमला का रस इन सब चीजों को भुने हुए मूँग के चूर्ण के साथ दो दिन तक घोट कर एक कर्ष प्रमाण में भक्षण करे तो धातुओं के साथ बुद्धि की वृद्धि होती है ॥ ६-७ ॥

देवदाल्याः सुपत्राणि विधिना च समाहरेत् ।
पिष्ट्वा तु गुटिकां कृत्वा छायायां परिशोषयेत् ॥ ८ ॥

देवदाली के अच्छे ( कोमल ) पत्तों को ग्रहण करे, उन्हें पीसकर गुटिका बनाकर छाया में सुखा लेवे ॥ ८ ॥

प्रत्यूषे भक्षयेत् प्राज्ञः प्रणम्य वृषभध्वजम् ।
वातगुल्मयकृत्प्लीहवृद्धयो यान्ति संक्षयम् ॥ ९ ॥

इसे प्रातः काल शिवजी को प्रणाम करके बुद्धिमान् मनुष्य भक्षण करे तो वात गुल्म, यकृत् और प्लीहा की वृद्धि अथवा वृद्धि ( Hydrocele ) नष्ट होती है ॥ ९ ॥

देवदाल्यास्तु पञ्चाङ्गं सूक्ष्मचूर्णं च कारयेत् ।
तच्चूर्णं सर्पिषालोड्य यो भुङ्क्ते सप्तरात्रकम् ॥ १० ॥
सर्वानपि वशीकुर्यात् स्त्रीणां प्रियतमो भवेत् ।

देवदाली के पञ्चाङ्ग का सूक्ष्म चूर्ण बना लेवे, उस चूर्ण को घृत से मिश्रित कर जो सात रात्रि तक सेवन करता है वह सभी को वश में कर लेता है और स्त्रियों का प्रियतम ( अतिप्रिय ) होता है ॥ १० ॥

देवदालीरसैस्तुल्यं श्वेतं निक्षिप्य सर्षपम् ॥ ११ ॥
लक्ष्मणामपि संयोज्य गुटिकां कारयेद् बुधः ।
कर्षार्धं भक्षयेन्नित्यं कासश्वासौ विनश्यतः ॥ १२ ॥

देवदाली के रस के समान सफेद सरसों छोड़कर तथा लक्ष्मणा को भी मिलाकर विद्वान् पुरुष गुटिका बना लेवे, इसे आधाकर्ष प्रमाण में नित्य भक्षण करने से कास और श्वास विनष्ट होते हैं ॥ ११-१२ ॥

शुक्लपक्षे पौर्णमास्यां पुष्ययुक्ते शुभे दिने ।
विधानेन बलिं दद्यात्तद्वनस्पतये ततः ॥ १३ ॥
होमादींश्च विधायाथ नमस्कृत्वा जितेन्द्रियः ।
प्रदक्षिणत्रयं कृत्वा देवदालीं समुद्धरेत् ॥ १४ ॥

ओं नमो भगवते ईश्वराय सोमसंभवाय देवदालिने स्वाहा । ओं महेश्वराय हृदयम् ।

ओं भूताधिपतये शिरोनेत्रे महाबलाय स्वाहा ।

शुक्ल पक्ष की पूर्णिमा तिथि को जब पुष्य नक्षत्र तथा शुभ दिन मिले, तब



विधिपूर्वक उस वनस्पति ( देवदाली ) को बलि देकर तथा होमादि करके नमस्कार कर जितेन्द्रिय पुरुष तीन परिक्रमा करके ॐ नमो इत्यादि मंत्र से देवदाली का ग्रहण करे ॥ १३-१४ ॥

अस्य भक्षणमन्त्रः—
ओं देवप्रयत्नेन निर्विघ्नं जायते । तेजोमालिनी विद्वेषान् जहि स्वाहा ।

इसके भक्षण करने का मंत्र :—
ॐ देवप्रयत्नेन निर्विघ्नं जायते । तेजोमालिनि विद्वेषान् जहि स्वाहा ।

नेत्रमन्त्रः—ओं नमो भगवति महावीरे ईशाने अमृतसंभवे सर्वभूतवशंकर्यै स्वाहा । ओं देवदालिन् सर्वभूतसिद्धिहृदयं भव । मूलमन्त्रः—मां रं ओं महाबले सर्वभूतसंनाशिनि हुं फट् स्वहा ।

देवदाली महावीर्यः सर्वशत्रुविनाशनः ।
महौषधे सिद्धिदा त्वं गङ्गावत्पापनाशिनि ॥ १५ ॥

देवदाली अधिक वीर्यशाली है, सभी शत्रुओं को नष्ट करती है, हे महौषधे ! तुम सिद्धि देने वाली हो तथा गङ्गा के समान पाप को नष्ट करने वाली हो ॥ १५ ॥

अमृतगमने मां रक्ष स्वाहा । कवचम् । देवदालीमहाभूताधिपतये ओं नमः स्वाहा ।

सदा चानेन मन्त्रेण चोद्धरेत् प्रयतः शुचिः ।
उदङ्मुखः प्राङ्मुखो वा नियमेनोद्धरेत् स्थितः ॥ १६ ॥

हमेशा देवदाली महाभूताधिपतये ॐ नमः स्वाहा ।
इस मंत्र से पवित्र होकर एकाग्रचित्त से उत्तर अथवा पूर्व मुख होकर नियम से उखाड़े ॥ १६ ॥

उलूखले क्षालिते च मर्दयित्वा हरेद्रसम् ।
पयसा भाजने लौहे पाचयेच्च तुषाग्निना ॥ १७ ॥

धोए हुए उलूखल ( ओखली ) में मर्दन करके रस निकाले, लौह के पात्र में दूध से तुष ( भूसी ) की आँच पर पकावे ॥ १७ ॥

वमनं रेचनं कृत्वा शुक्लपक्षे शुभे दिने।
पिबेन्मासं भवेत्तेन वृद्धिरग्नेर्बलस्य च॥ १८॥

शुक्लपक्ष के शुभदिन में वमन और विरेचन से शुद्ध होकर एक मास तक पान करे उससे अग्निबल की वृद्धि होती है॥ १८॥

देवदालीसर्षपौ च बिडालपदमात्रतः।
औदुम्बरजलैर्भोज्यौ गुल्मप्लीहभगन्दराः॥ १९॥
कामलापाण्डुरोगाद्या विनश्यन्ति विशेषतः।

देवदाली और सर्षप को बिडालपद ( १ कर्ष ) प्रमाण में गूलर के जल से भक्षण करने से गुल्म, प्लीहा, भगन्दर, कामला और पाण्डुरोग आदि विशेष रूप से शान्त होते हैं॥ १९॥

अस्य चूर्णं तु संगृह्य वाजिगन्धासमन्वितम्॥ २०॥
सर्पिषा भक्षयेन्नित्यं वाजीकरणमुत्तमम्।

इसका चूर्ण और अश्वगन्धा चूर्ण को मिलाकर घृत से प्रतिदिन भक्षण करने से उत्तम वाजीकरण है॥ २०॥

ओषध्या देवदाल्यास्तु गुणा एवंप्रकीर्तिताः॥ २१॥

इस प्रकार औषधि देवदाली के गुण कहे गये हैं॥ २१॥

## अथैरण्डकल्पः

एरण्डकल्पस्त्वत्यन्तमुत्तमः शंकरो नृणाम्।
चतुर्विधश्च स ज्ञेयो रक्तपीतादिभेदतः॥ १॥

एरण्ड कल्प मनुष्यों के लिए अत्यन्त उत्तम और कल्याणकारी है। रक्त, पीत आदि भेद से यह चार प्रकार का होता है॥ १॥

तत्तैलं वासरे भानोर्ग्राहयेद्विधिवत्ततः।

उसके तैल को रविवार के दिन विधिपूर्वक ग्रहण करे।

रक्तैरण्डकतैलेन शुद्धसूतकगन्धकैः॥ २॥



पूरयित्वा लोहपात्रं पचेन्मृद्वग्निना भिषक्।
याममात्रेण तत्सर्वं भवेद् गुञ्जानिभं ध्रुवम्॥ ३॥

रक्त एरण्ड तैल तथा शुद्ध पारद और गन्धक से लौह पात्र को पूर्ण कर मृदु आँच पर वैद्य पाक करे। एक प्रहर मात्र में वह सब गुजा के समान हो जाता है॥ २-३॥

तत्तारनागताम्रेषु दशांशेन च वेधयेत्।

वह तार ( चाँदी ) नाग और ताम्र में दशांश मात्र से ही वेध करता है।

तत्तैलं मधुना युक्तं गन्धकेन समन्वितम्॥ ४॥
भुवि मासं विनिक्षिप्य ततश्चोद्धृत्य बुद्धिमान्।
प्रातर्निष्कं तु विलिहेत् तदर्धं चाह्नि निश्यपि॥ ५॥
तरुणादित्यसंकाशो भवेन्मासप्रयोगतः।

उस तैल को गन्धक और मधु मिलाकर एक मास तक पृथ्वी में गाड़ देवे, बाद में निकालकर बुद्धिमान् पुरुष प्रातःकाल एक निष्क प्रमाण में तथा मध्याह्न और रात में उससे आधा प्रमाण में चाटे। इसका एक मास प्रयोग करने से मनुष्य तरुण ( बाल ) सूर्य के समान ( देदीप्यमान ) हो जाता है॥ ४-५॥

शुद्धकोष्ठः प्रकुर्वीत गुरुवन्दनमादितः॥ ६॥
औषधं चाथ भुञ्जीत क्षीराहारो जितेन्द्रियः।

कोष्ठशुद्धि करके पहले गुरु की वन्दना करे उसके बाद औषध का भक्षण करे। इन्द्रियों को वश में रखकर दुग्ध मात्र का आहार करे॥ ६॥

मासद्वयप्रयोगेण बलमायुश्च विन्दति॥ ७॥

इस प्रकार दो मास के प्रयोग से मनुष्य बल और आयु को प्राप्त करता है॥ ७॥

कृष्णैरण्डकतैलं तु कृष्णागोक्षीरसंयुतम्।
शुद्धकोष्ठः पिबेत् सद्यः कर्षद्वयमितं कृशः॥ ८॥
ब्राह्मीरसेन च तथा पुष्टिं मासेन विन्दति।

दुर्बल मनुष्य काले एरण्ड के तैल को काली गौ के दुग्ध से अथवा ब्राह्मी के

रस से शुद्धकोष्ठ होकर तुरन्त दो कर्ष प्रमाण में पान करे तो एकमास में पुष्टि को प्राप्त करता है ॥ ८ ॥

श्वेतैरण्डस्य मूलं तु गृहीत्वा पुष्यतारके ॥ ९ ॥
सकर्पूरं घृतं तेन सक्षीरं च विपाचयेत् ।

पुष्य नक्षत्र में सफेद एरण्ड के मूल का ग्रहण करे, उसे कपूर और घृत के साथ पकावे ॥ ९ ॥

अञ्जयेन्नेत्रयुगलं नश्यन्त्यक्षिगतामयाः ॥ १० ॥
सिद्धाञ्जनमिदं सिद्धं कामलामपि नाशयेत् ।

उस घृत का दोनों आँखों में अञ्जन करने से आँख के रोग विनष्ट होते हैं यह सिद्धाञ्जन है, कामला को भी नष्ट करता है ॥ १० ॥

तन्मूलं चापि पाषाणशुद्धसूतसमन्वितम् ॥ ११ ॥
शिलाचन्द्रवसायुक्तं धमेदन्धाख्यमूषके ।
शाल्मलीखदिराङ्गारैः क्रियाबद्धं भवत्यलम् ॥ १२ ॥

उसका मूल पाषाण और शुद्ध सूत ( पारद ) से युक्त तथा शिला, चन्द्र और वसा से युक्त कर अन्ध नामक मूषा में फूक देवे ।

शाल्मली ( सेमर ) और खदिर की आँच देवे, इससे क्रियाबद्ध हो जाता ॥ ११-१२ ॥

तद् वङ्गेषु द्रुतं क्षिप्तं सहस्रांशेन वेधयेत् ।
श्वेतगोक्षीरसंयुक्तं तन्मूलं निष्कमात्रकम् ॥ १३ ॥
लिहेद्गोघृतमिश्रं वा क्षीराशी विजितेन्द्रियः ।
मासैकस्य प्रयोगेण चन्द्रवन्निर्मलो भवेत् ॥ १४ ॥

वह वंग में सहस्रांश प्रमाण में डालने से तुरन्त विद्ध किरता है ।

सफेद गाय के दुग्ध से अथवा गौ के घृत और मिश्री से एक निष्क प्रमाण में उसका मूल दूध का भक्षण करते हुए इन्द्रियों के वश में करके एकमास तक प्रयोग करने से मनुष्य चन्द्रमा के समान निर्मल हो जाता है ॥ १३-१४ ॥

मासद्वयप्रयोगेण बलवान्नात्र संशयः ।



दो मास के प्रयोग से बलवान् होता है इसमें सन्देह नहीं है ।

मासत्रयप्रयोगेण दीर्घमायुरवाप्नुयात् ॥ १५ ॥

तीन मास प्रयोग करने से दीर्घ ( लम्बी ) आयु प्राप्त होती है ॥ १५ ॥

पीतैरण्डस्य मूलं तु ग्राहयेदर्कवासरे ।
छायाशुष्कं ततः कृत्वा नवनीतेन पेषयेत् ॥ १६ ॥

पीले एरण्ड का मूल रविवार को ग्रहण करके छाया में सुखाकर मक्खन से पीस लेवे ॥ १६ ॥

त्रिकटुत्रिफलायुक्तं सितया मधुनान्वितम् ।
स्निग्धभाण्डे विनिक्षिप्य शीतलायां भुवि क्षिपेत् ॥ १७ ॥

त्रिकटु ( सोंठ, मिर्च और पीपर ), त्रिफला ( हर्रा, वहेरा, आमला ), सिता ( मिश्री ) और मधु से युक्त कर चिकने पात्र में रखकर ठण्डी जमीन में गाड़ देवे ॥ १७ ॥

मासादुद्धृत्य तद् द्रव्यं लिहेन्निष्कप्रमाणतः ।
निवातशायी क्षीराशी तिष्ठेदम्लानमानसः ॥ १८ ॥

एक मास के बाद उखाड़ कर एक निष्क प्रमाण में भक्षण करे, तथा प्रयोग करते समय निर्वात स्थान में शयन करे, दुग्ध का भक्षण करे तथा प्रसन्न चित्त रहे ॥ १८ ॥

एकमासप्रयोगेण बली वृद्धोऽपि जायते ।
मासत्रयप्रयोगेण दीर्घमायुरवाप्नुयात् ॥ १९ ॥

इस प्रकार एक महीना प्रयोग करने से वृद्ध भी बलवान हो जाता है और तीन मास प्रयोग करने से दीर्घ आयु प्राप्त होती है ॥ १९ ॥

मलग्रहः स्वयं याति विनाशं सर्वदेहिनाम् ।
अशीतिरामयाश्चापि वातजा यान्ति संक्षयम् ॥ २० ॥

सभी प्राणियों का मलग्रह ( विबन्ध ) स्वयं विनष्ट हो जाता है तथा अस्सी ( ८० ) प्रकार की वातव्याधि नष्ट हो जाती ॥ २० ॥

स्निग्धपुष्टसमस्ताङ्गः सुखी संधुक्षितानलः ।

जीवेज्जीवसमो बुद्ध्या बहुकालं नरो भुवि ॥ २१ ॥

सभी शरीर चिकना और पुष्ट होता है, सुखी, अग्नि दीप्तिमान; बुद्धि में ( बृहस्पति ) के समान और बहुत समय तक मनुष्य जीवित रहता है ॥२१॥

## अथ मयूरशिखाकल्पः

ओषधीनां वरां ज्येष्ठां वर्णनीयां सुरैरपि ।
शृणु पार्वति यत्नेन सुराणां च सुखप्रदाम् ॥ १ ॥

हे पार्वति ? देवताओं को भी सुख देने वाली, औषधियों में श्रेष्ठ और ज्येष्ठ ( प्रथमोद्भूत ) तथा देवताओं से भी वर्णनीय ( मयूरशिखा के कल्प ) को यत्नपूर्वक श्रवण करो ॥ १ ॥

बहुप्रकाररूपां तामहमद्य ब्रवीमि ते ।

उसके बहुत से भेद और रूपों को आज मैं तुम से कहूँगा ।

मूलावर्ता शिखारम्या सहदेवी कुमारिका ॥ २ ॥
मधुपर्णी केतकी च मालती विषहा स्मृता ।
गोरम्भा च समाख्याता सुभगा विशिखा स्मृता ॥ ३ ॥
एवं च साधकैरेषा नैकैर्नामभिरुच्यते ।
नाम्ना शिखिशिखेत्येव सर्वैराहूयते भुवि ॥ ४ ॥

मूलावर्ता, शिखारम्या, सहदेवी, कुमारी, मधुपर्णी, केतकी, मालती, विषहा, गोरम्भा, सुभगा और विशिखा आदि अनेक नामों से साधक इसे कहते हैं तथा शिखिशिखा ( मयूरशिखा ) नाम से सभी लोग पृथ्वी पर इसे कहते हैं ॥ २–४ ॥

संगृह्य पुष्यनक्षत्रे बालानां बन्धयेद् गले ।
ग्रहभूतपिसाचेभ्यः शाकिनीभ्यो हरेद्भयम् ॥ ५ ॥

पुष्य नक्षत्र में उसका ग्रहण करके बालकों के गले में बाँधने से ग्रह, भूत, पिशाच और शाकिनी का भय नष्ट होता है ॥ ५ ॥



धूपं भूतज्वरे दद्यात्तं तदेवोपशामयेत् ।

भूत ज्वर में उसका धूप देने से तुरन्त उसको शान्त करती है ।

तस्या मूलं शिखायां च बद्ध्वा रात्रौ व्रजेद्बहिः ॥ ६ ॥
न भूतेभ्यो भुजङ्गेभ्यो नाप्याप्नोति भयं क्वचित् ।

उसके मूल को शिखा में बाँधकर ,रात्रि में बाहर जावे । इससे भूत और सर्प का कहीं भी भय नहीं होता है ॥ ६ ॥

उच्चाटयेच्च तत्सूक्ष्मशाखया हि महाग्रहान् ॥ ७ ॥

उसकी सूक्ष्म शाखा में ( बाँधने से ) महाग्रहों को भी उच्चाटित करती है ॥ ७ ॥

हस्ते बद्ध्वा वृश्चिकस्य विषं वित्रासयेन्नरः ।

हाँथ में बाँधकर मनुष्य बिच्छू के विष से निर्भय होता है ।

ताम्बूलेनाशितं तच्च मूषिकस्य विषं हरेत् ॥ ८ ॥

तथा ताम्बूल के साथ भक्षण करने से मूषिक ( चूहा ) के विष को नष्ट करती है ॥ ८ ॥

सर्पिषा मर्दितेनास्य नस्यं मूलेन दापयेत् ।
सर्पदष्टः सुखं याति द्वित्रैरेव क्षणैरपि ॥ ९ ॥

इसके मूल को घृत में रगड़ कर नस्य देने से सर्प का काटा हुआ मनुष्य दो-तीन क्षण में ही सुखी ( विषमुक्त ) होता है ॥ ९ ॥

ॐ नमः खरमुखाय शक्तिहस्ताय यमपुरवाहनाय कर्मदक्षाय ओषधिराजाय ठः ठ स्वाहा ।

अनेन मन्त्रेण सप्तवारमभिमन्त्र्य कृष्णचतुर्दशीयामिन्यां शुचिर्भूत्वा मयूरशिखामुत्पाटयेत् ।

ॐ नमः⋯इस मंत्र से सात बार अभिमंत्रित करके कृष्ण पक्ष की चतुर्दशी तिथि की रात्रि में पवित्र होकर मयूरशिखा को उखाड़े ।

एवं सा संगृहीता स्यात् सुप्रभावसमन्विता ।

इस प्रकार संग्रह करने से यह सुप्रभाव ( अच्छे प्रभाव ) से युक्त होती है ।

ततः समूलां तां सम्यगातपे शोषयेन्मृदौ ॥ १० ॥

(उखाड़कर) समूल इस मयूरशिखा को मृदु आतप (नरम घाम) में सुखावे।

चूर्णयित्वा सुसूक्ष्मं तच्चूर्णं च मधुना भजेत्।
त्रिकर्षमात्रया नित्यं सत्यं स्यात् सुमहद्बलम् ॥ ११ ॥

सूक्ष्म चूर्ण करके, उस चूर्ण को त्रिकर्ष की मात्रा में नित्य मधु से भक्षण करे तो निश्चित ही अधिक बल-संपन्न होता है ॥ ११ ॥

मधुना च घृतेनापि कुर्यात्तदवलेहकम्।
शाणमात्रं ततः खादेन्मासेन स्यान्महद्बलम् ॥ १२ ॥

मधु और घृत मिलाकर उसका अवलेह बना लेवे, उसे एक शाण प्रमाण में भक्षण करे तो अधिक बलशाली होता है ॥ १२ ॥

पचेन्मयूरशिखया तैलं सक्षीरमम्भसा।
तदभ्यक्तं केशदोषान् पलितादीनपोहयेत् ॥ १३ ॥

मयूरशिखा के जल ( स्वरस ) से दुग्धसहित तैल पकावे उस तैल के अभ्यङ्ग से केश-दोष-पलितादिक नष्ट होते हैं ॥ १३ ॥

सूर्यावर्तं तथान्यांश्च शिरोरोगान् हरेदिदम्।
तार्क्ष्यस्याक्षीव नेत्रं च सुसूक्ष्मग्राहि जायते ॥ १४ ॥

तथा सूर्यावर्त ( अर्धावभेदक ) तथा अन्य शिरोरोग नष्ट होते हैं। गरुड़ की आँख के समान सूक्ष्म ग्रहण करने वाले नेत्र हो जाते हैं ॥ १४ ॥

त्रिःसप्तदिवसैरास्यं स्यात् सुवर्णसमप्रभम्।
निषिक्तं श्रोत्रयोः कुर्याच्छब्दग्राहं नृणां सदा ॥ १५ ॥

इक्कीस दिन सेवन करने से मुख सूर्य के समान कान्ति-सम्पन्न हो जाता है। कान में डालने से मनुष्य को सर्वदा शब्द ग्रहण में समर्थ (बाधिर्य मुक्त) करता है ॥ १५ ॥

हेमक्षीर्या रसैर्मर्द्या मयूरस्य शिखा भृशम्।
ततस्तत्कल्कसंमिश्रं क्षीरं पेयं निशासु च ॥ १६ ॥

स्वर्णक्षीरी के रस से मयूरशिखा को खूब मर्दित करे फिर उसके कल्क से मिश्रित दुग्ध रात्रि में पान करे ॥ १६ ॥



वृष्यमत्युत्तमं विद्यान्मेदोमांसप्रवर्धकम्।
वातरोगांश्च शमयेदशीतिं नात्र संशयः ॥ १७ ॥

यह अत्युत्तम वृष्य है तथा मेद और मांस का बढ़ाने वाला है। अस्सी ( ८० ) प्रकार के वात रोगों को शान्त करता है इसमें सन्देह नहीं है ॥ १७ ॥

मूलं तु गिरिकर्ण्याश्च श्वेताया रविवासरे।
उत्पाटयेद् भृङ्गराजं समूलं च सबीजकम् ॥ १८ ॥
स्वात्यां तथा पञ्चमूलं कुमार्या मूलमेव च।
श्वेतार्कस्य तथा मूलं ग्राहयेन्नियतो नरः ॥ १९ ॥
संशोष्य सर्वमेकत्र चूर्णयेत् सूक्ष्मशो भिषक्।
तेषां तुल्यं मयूरस्य शिखायाश्चूर्णमर्पयेत् ॥ २० ॥

सफेद गिरिकर्णिका का मूल रविवार को उखाड़े, स्वाती में बीज और मूल सहित भृङ्गराज को ग्रहण करे, पंचमूल, कुमारीमूल तथा सफेद अर्क ( मंदार ) का मूल मनुष्य ग्रहण करके, इन सबको एकत्र सुखाकर सूक्ष्म चूर्ण कर लेवे और इन सब चूर्णों की समान मात्रा में मयूरशिखा का चूर्ण मिला देवे ॥ १८–२० ॥

गुञ्जाचतुष्टयं तत्र मधुना पयसापि वा।
प्रत्यहं भक्षयेत् प्रातः कट्वम्ललवणांस्त्यजेत् ॥ २१ ॥

चार गुंजा प्रमाण में मधु से अथवा दुग्ध से प्रतिदिन भक्षण करे तथा कटु, अम्ल और लवण रसों का परित्याग करे ॥ २१ ॥

पक्षाभ्यां पक्षघाताद्यास्तीक्ष्णरोगास्तथापरे।
यान्त्यामवातप्रमुखाः क्षयं नात्रास्ति संशयः ॥ २२ ॥

दो पक्ष ( एक महीना ) में पक्षघात ( पक्षाघात–लकवा ) आदि तीक्ष्ण रोग ( Acute caes ) तथा आमवात आदि नष्ट होते हैं इसमें सन्देह नहीं है ॥ २२ ॥

चूर्णं च त्रिफलायास्तु निम्बपञ्चाङ्गचूर्णकम्।
चूर्णं शिखिशिखायाश्च ग्राह्यं तुल्यप्रमाणतः ॥ २३ ॥

भाण्डे घृताक्ते तत्सर्वं निक्षिपेदथ माक्षिकम् ।
भागद्वयं योजयेच्च शर्करापि समांशतः ॥ २४ ॥

समानप्रमाण में त्रिफला चूर्ण, निम्ब के पंचांग का चूर्ण और मयूरशिखा का चूर्ण लेकर घृत से स्निग्ध पात्र में सब चीज रखे तथा उसके दो भाग माक्षिक ( मधु ) और समभाग शर्करा मिलावें ॥ २३–२४ ॥

धान्यमध्ये स्थापयेच्च भाण्डं पिहितवक्त्रकम् ।
त्रिपक्षान्ते ततः खादेत्कर्षं कर्षं नरोऽन्वहम् ॥ २५ ॥

पात्र का मुख ढँक कर धान्य ( अन्न ) के बीच में रखे। त्रिपक्ष (डेढ़ मास) के बाद में मनुष्य एक कर्ष प्रमाण में प्रतिदिन भक्षण करें ॥ २५ ॥

योजयेदनुपानेन गोक्षीरं चाज्यमेव वा ।

अनुपान में गोदुग्ध अथवा घृत मिलावै ।

यथेष्टं भुज्यतां चान्नं दधिक्षीरघृतैः सह ॥ २६ ॥

दही, दूध और घृत के साथ यथेष्ट अन्न का सेवन करे ॥ २६ ॥

नश्यन्त्यर्शांसि स भवेच्छुद्धकोष्ठः सदा नरः ।

इससे अर्श ( बवासीर ) नष्ट होते हैं तथा मनुष्य शुद्ध कोष्ठ ( विबन्ध रहित ) सर्वदा रहता है ।

ज्वरा यान्त्यन्तिकं नास्य कदाचिद्वातजादयः ॥ २७ ॥

बात आदि ज्वर उस मनुष्य के समीप नहीं जाते हैं ॥ २७ ॥

तुष्टिं पुष्टिं च भजते स नरः सर्वदा प्रिये ! ।
विमलानीन्द्रियाण्यस्य सकलानि भवन्ति च ॥ ॥ २८ ॥

हे प्रिये ! वह मनुष्य संतोष और पोषण को प्राप्त करता है तथा सभी इन्द्रियाँ निर्मल हो जाती हैं ॥ २८ ॥

रसेन काकजङ्घायाः सैन्धवेन च तां शिखाम् ।
मृदित्वा वटिकां कुर्याद् गुञ्जाफलसमां ततः ॥ २९ ॥

काकजंघा के रस और सेंधा नामक से मयूरशिखा को घोट कर गुञ्ज ( रत्ती ) प्रमाण में गोली बना लेवै ॥ २९ ॥



दुष्टाः पुराणा नश्यन्ति मलाः कोष्ठे दिने दिने ।
गुल्ममानाहमुदरमजीर्णमपि हन्ति तत् ॥ ३० ॥

इससे कोष्ठ में स्थित दूषित और पुराना मल नष्ट होता है तथा गुल्म, आनाह, उदररोग और अजीर्ण नष्ट होता है ॥ ३० ॥

चूर्णं शिखिशिखायाश्च स्नुहीचूर्णचतुर्गुणम् ।
भोक्तव्यं गव्यतक्रेण पञ्चमाषप्रमाणतः ॥ ३१ ॥

मयूरशिखा का चूर्ण एक भाग और उसका चौगुना स्नुही ( सेहुण्ड ) का चूर्ण मिलाकर पाँच माष (उरद) प्रमाण में गाय के मट्ठा से भक्षण करै ॥३१॥

पतन्ति क्रिमयः कोष्ठादुदावर्तश्च नश्यति ।
चूर्णमेतत् प्रदातव्यमृतुस्तम्भे स्त्रियां सदा ॥ ३२ ॥
दुग्धेन पक्षान्नश्यन्ति सर्वे गर्भाशयामयाः ।
दधते गर्भमप्येताः शीघ्रं सर्वगुणैर्युतम् ॥ ३३ ॥

इससे कोष्ठ ( पेट से ) से क्रिमि गिर पड़ते हैं और उदावर्त नष्ट होता है ।

इस चूर्ण को स्त्रियों के ऋतुस्तम्भ ( Retention of Menstruation ) में प्रायः दुग्ध से देना चाहिए ।

इसके एक पक्ष के प्रयोग से सभी गर्भाशय के विकार नष्ट होते हैं और स्त्रियाँ सभी गुणों से युक्त गर्भ को शीघ्र धारण करती हैं ॥ ३२–३३ ॥



## अथ ब्रह्मदण्डीकल्पः

ब्रह्मदण्डीति विख्याता भुवि काचिन्महौषधिः ।
तत्र भेदद्वयं चास्ते श्वेतकृष्णात्मना तथा ॥ १ ॥

पृथ्वी पर ब्रह्मदण्डी इस नाम से विख्यात कोई महौषधि है। उसके श्वेत और कृष्ण भेद से दो भेद हैं ॥ १ ॥

आश्विने कार्तिके मासे ग्राहयेत्तां महौषधिम् ।
यस्या रसं च संगृह्य गुग्गुलेन विमिश्रयेत् ॥ २ ॥

आश्विन और कार्तिक मास में उस महौषधि को ग्रहण करे। उसके रस को ग्रहण करके गुग्गुल मिलावै ॥ २ ॥

कुर्याल्लेपं शरीरेऽथ कण्डूपामादयोऽपि च।
विसर्पारूंषिकाद्याश्च त्वग्दोषा यान्ति संक्षयम् ॥ ३ ॥

इसका शरीर पर लेप करने से कण्डू, पामा, विसर्प और अरूंषिका आदि त्वग्दोष ( चर्मरोग ) नष्ट होते हैं ॥ ३ ॥

कृष्णपक्षे गृहीता सा भूतवेतालडाकिनीः।
उच्चाटयेद्धृता हस्ते ग्रहपीडां तथा हरेत् ॥ ४ ॥

कृष्णपक्ष में ग्रहण करके हाथ में बाँधने से भूत, वेताल और डाकिनी का उच्चाटन करती है तथा ग्रहपीड़ा को नष्ट करती है ॥ ४ ॥

मूलं तु ब्रह्मदण्ड्यास्तु पुष्यर्क्षे ग्राहयेच्छुचिः।
त्वचं तस्य विचूर्ण्याथ भक्षयेद्भानुवासरे ॥ ५ ॥

ब्रह्मदण्डी के मूल को पुष्य नक्षत्र में पवित्र होकर ग्रहण करे ॥ ५ ॥

तत्रानुपानं पालाशकाथमेवोपयोजयेत्।
रेतः संवर्धयत्येतद्रजः स्त्रीणामपि ध्रुवम् ॥ ६ ॥

उसकी ( मूल के ) छाल को चूर्ण करके पलाश क्काथ के अनुपान से रविवार को पिलावै, यह वीर्य वृद्धि करता है तथा स्त्रियों की रजोवृद्धि निश्चित रूप से करता है ॥ ६ ॥

ब्रह्मदण्डीं कुमारीं च गोमयेन विभावयेत्।
ततस्तदुभयं खल्वे मृदित्वा कल्कमाहरेत् ॥ ७ ॥

ब्रह्मदण्डी और कुमारी को गोबर से भावित कर दोनों को खरल में मर्दित कर कल्क बना लेवै ॥ ७ ॥

दध्नाऽथवा काञ्जिकेन भोक्तव्यं कर्षमात्रया।
रजोदोषान् शुक्रदोषानपोह्यापत्यदं भवेत् ॥ ८ ॥

इसे एक कर्ष प्रमाण में दही अथवा काञ्जी से भक्षण करे तो रजोदोष और शुक्र दोष को नष्ट कर पुत्रोत्पत्ति करता है ॥ ८ ॥



बृहतीं ब्रह्मदण्डीं च समांशेन समुद्धरेत्।
अश्वगन्धा द्वयोस्तुल्या त्रीनेकत्र विचूर्णयेत् ॥ ९ ॥
नवनीतेन तच्चूर्णं सेव्यं निष्कप्रमाणतः।
महद्वीर्यं स्त्रियाश्चापि पुरुषस्यापि जायते ॥ १० ॥

बृहती और ब्रह्मदण्डी को बराबर मात्रा में लेकर, दोनों के बराबर अश्वगंधा मिलाकर तीनों को एकत्र चूर्ण कर लेवै। इस चूर्ण को एक निष्क-प्रमाण में नवनीत से भक्षण करे, तो वह स्त्री तथा पुरुष दोनों के लिए बहुत वीर्यकर होता है ॥ ९-१० ॥

क्षीरं प्रवर्धते नार्याः पुष्टिस्तुष्टिस्तथा भवेत्।

स्त्री का दूध बढ़ता है और पुष्टि और तुष्टि होती है।

मूलं तु ब्रह्मदण्ड्याश्च करे सूत्रेण बद्धयताम् ॥ ११ ॥
तृतीयकं ज्वरं हन्ति चातुर्थिकमपि स्वयम्।

ब्रह्मदण्डी के मूल को सूत से हाथ में बाँधने से तृतीयक तथा चातुर्थिक ज्वर को नष्ट करता है ॥ ११ ॥

निर्गुण्ड्याः स्वरसे ब्रह्मदण्डीमूलरसं क्षिपेत् ॥ १२ ॥
द्वयोस्तुल्यं योजयेच्च दुग्धमौदुम्बरं तथा।
प्रातः पीत्वा प्रमेहादिमूत्ररोगैर्विमुच्यते ॥ १३ ॥

निर्गुण्डी के रस में ब्रह्मदण्डी के मूल का रस छोड़े और दोनों के बराबर प्रमाण में उदुम्बर ( गूलर ) का दूध मिलावै। इसको प्रातः काल पान करने से प्रमेहादि मूत्ररोगों से मनुष्य मुक्त होता है ॥ १२-१३ ॥

तेनैव क्रियतां नस्यं क्षयं यान्ति गलामयाः।
शिरोरोगाश्च नश्यन्ति लाघवं शिरसो भवेत् ॥ १४ ॥

उससे नस्य देने से गले के रोग विनष्ट होते हैं तथा शिरो रोग भी नष्ट होता हैं एवं शिर हल्का होता है ॥ १४ ॥

## अथ सहदेवीकल्पः

सहदेवी महावीर्या प्रोक्ता सर्वगुणैर्युता।
तामुद्धरेच्चतुर्दश्यां कृष्णाष्टम्यामहर्मुखे ॥ १ ॥

अधिक वीर्यशाली सहदेवी सभी गुणों से युक्त कही गयी है। उसे कृष्णपक्ष की अष्टमी अथवा चतुर्दशी तिथि को प्रातः काल भक्षण करें ॥ १ ॥

औषधिं तां समानीय बद्ध्वा सूत्रेण धारयेत्।

उस औषधि को ग्रहण करके सूत्र से बाँध करके धारण करे।

स्त्रियः सुखं प्रसूयन्ते दूरे यान्ति ग्रहाः स्वयम् ॥ २ ॥

इससे स्त्रियों का सुखपूर्वक प्रसव होता है तथा ग्रह स्वयं दूर हो जाते हैं ॥ २ ॥

कण्ठे निबद्धा बालानां गण्डमालामपोहयेत्।
कटिमध्ये निबद्धा तु कुक्षिरोगान् विनाशयेत् ॥ ३ ॥

लड़कों के कण्ठ में बांधने से गण्डमाला को नष्ट करती है और कमर में बाँधने से उदर रोग को नष्ट करती है ॥ ३ ॥

घृतेन सह तच्चूर्णं सेव्यं प्रातर्दिने दिने।
अजीर्णमखिलं नश्यत्यग्निः संधुक्ष्यते तथा ॥ ४ ॥

प्रतिदिन प्रातः काल घृत से उसका चूर्ण सेवन करने से सब प्रकार का अजीर्ण नष्ट होता है और अग्नि दीप्त होती है ॥ ४ ॥

अनया पाचयेत्तैलं तच्च मूर्ध्नि विलेपयेत्।
मूर्धरोगा विनश्यन्ति पलितं याति च क्षयम् ॥ ५ ॥

इससे तेल पकाकर शिर पर लेप करें, इससे शिरोरोग नष्ट होते हैं तथा पलित होता है ॥ ५ ॥

विपाचयेद् घृतं तस्या रसेन पयसापि च।
भक्षयेन्मासपर्यन्ते कुष्ठान् नाशयति ध्रुवम् ॥ ६ ॥



उसके (सहदेवी) रस और दूध से घृत पकावै तथा एक मास तक सेवन करें तो निश्चित ही सभी कुष्ठ बिनष्ट होते हैं ॥ ६ ॥

## ग्रन्थपरिचयः

एवं ते बहवः कल्पाः सम्प्रति प्रतिपादिताः।
यैश्च लोके मनुष्याणां दीर्घमायुर्बलं भवेत् ॥ १ ॥

भगवान शिव देवेश्वरी पार्वती से कह रहे हैं कि इस प्रकार बहुत से कल्प मैंने तुम से कहे हैं, जिनसे मनुष्यों की दीर्घ आयु और बल-वृद्धि संसार में होती है ॥ १ ॥

काकचण्डीश्वराख्योऽसौ ग्रन्थस्ते पुरतः प्रिये।
बहुकल्पसमायुक्तः संग्रहेणोदितो मया ॥ २ ॥

हे प्रिये ! यह काकचण्डीश्वर नामक ग्रन्थ तुम्हारे सम्मुख है, इसे संक्षेप से मैंने कहा है ॥ २ ॥

प्राग्ब्रह्मणा कृतं तन्त्रं महदस्ति मम प्रिये।
महद्भिर्योगिभिः सिद्धैरपि तन्नाधिगम्यते ॥ ३ ॥

हे प्रिये ! पहले ( आदि काल में ) ब्रह्मा से सम्पादित बहुत बड़ा मेरा तंत्र है। वह बहुत बड़े योगी और सिद्धों से भी बोधगम्य नहीं है ॥ ३ ॥

अतः समालोच्य मया बालानां हितकाम्यया।
तन्त्रमेतन्नवं प्रोक्तं येन यान्ति सुखं जनाः ॥ ४ ॥

इससे अच्छी प्रकार मनन करके बालकों के हित की दृष्टिसे यह नवीन तंत्र भी कहा है, जिससे मनुष्य सुखपूर्वक समझ सकें ॥ ४ ॥

प्रीत्यै तव च लोकस्य त्वन्नाम्ना ख्यातिमृच्छतु।
मन्नाम्नापि च सर्वत्र तन्त्रमेतत्सुरेश्वरि ॥ ५ ॥

हे सुरेश्वरि ! तुम्हारी और संसार की प्रसन्नता के लिए यह तंत्र तुम्हारे और मेरे नाम से सर्वत्र ( संसार में ) प्रसिद्धि को प्राप्त करे ॥ ५ ॥

इदं प्रिये ! लोकहितार्थमीरितं श्रीकाकचण्डीश्वरकल्पतन्त्रम् ।

हे प्रिये ! इस काकचण्डीश्वर कल्प तंत्र को मैंने संसार के कल्याण के लिए कहा है ।

भक्त्या पठेद्यः स न याति दुःखं बलं च मेधां महदायुराप्नुयात् ॥ ६ ॥

भक्तिपूर्वक जो उसे पढ़ता है वह दुःख को नहीं प्राप्त करता है तथा बल, मेधा और दीर्घ आयु को प्राप्त करता है ॥ ६ ॥

समाप्तमिदं तन्त्रम् ।



